Beginning. ॐ नमः श्रीकृष्णाय ।

चक्षिकभुवननाथं दुःखमातङ्गसिंहं
सुखशशिचितपक्षं नित्यमाराध्य कृष्णं ।
अथमविषयचिन्तावह्निसन्तापशान्ति-
र्यथित सपदि चिन्तामोदसिन्धौ निमज्ज ।

× × × × × ×

End. किन्नश्चाभितयीयावयवनमलपदामोदमुग्धा जना ये ।
तेषां पादारविन्दे स्थिरतरमधुपे भाव्यमेवाचिरेण ॥
शाके वर्षे धरिणीखरसशशिमिते वैदिको गौड़देशे ।
गङ्गापूरे ऽवतीर्णः सुकृतिगणयुते तर्कवागीशपुत्रः ॥
चिन्तामोदाख्यकाव्यं चरिमचिमसुधाविन्दुसम्पर्कमिदं ।
चन्द्रोदासो विपश्चितरजतरमनाश्चिन्तयन्नाभकार्षीत् ॥
इति चन्द्रोदासकविराजविरचितचिन्तामोदसिन्धुः समाप्तः ॥

Colophon. शाके तारकनाथकाननकृष्टत् कन्दर्पकोले दिने ?
तारानायकनायके चरकरे कन्याख्यके शोकति ?
... प्राश्चिकयदुनाथ नामक ... ...
× × × × श्लोकैककद्दाम्नकं ॥

विषयः । कृष्णमाहात्म्य कथनम् ॥

---

**No. 94.** चिन्तामणिपार्श्वनाथकल्प. Substance country-made paper, 12×5 inches. Folia, 2. Lines, 25 on a page. Extent, 200 çlokas. Character, Nāgara. Date, SN. 1904. Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, new. Prose and Verse. Incorrect.

Beginning. ॐ नमः श्री ॐ पार्श्वाय नमः ।

किञ्चिद् गुरूणां वदनारविन्दा-
न्निशम्य सम्यक् परमार्थसुधैः ।
विलिख्यते स्वान्यजनोपकृत्यै
श्रीपार्श्वचिन्तामणिमन्त्रकल्पः ॥

End. मह मयठाने पयड कमठ यठ संसारे ।
परिमिठि चठि चठे चठ गुणधीयवं वन्दे ॥

अनेनवार,१०८, अथवा २१ पुत्रादिक्रियानके क्रियते मवर्धं अविकतो भवति ।

**Colophon.** इति चिन्तामणिपार्श्वनाथकल्पः सम्पूर्णः . संवत् १९०४ .

**विषयः ।** चिन्तामणिपार्श्वनाथमन्त्रादि-कथनम् ।

---

**No. 95.** चैतन्यचन्द्रामृततरङ्गिणी . Substance, country-made paper, 12×5 inches. Folia, 28. Lines, 7 on a page. Extent, 700 çlokas. Character, Bengali. Date, ? Place of deposit, Dinajpur. Paṇḍit Kṛṣṇadāsa Smṛitibhūṣana. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीगोविन्ददेवो जयति ॥

श्रीमन्नित्यानन्दचैतन्यचन्द्रौ

दीनश्रेणिपीयूषसान्द्रौ

विद्वद्वृन्दस्यन्दमानात्मतत्त्वौ

सत्त्वौदार्य्यात् सेवकाग्रः पुणीतां ॥

अथ सोयं विद्वत्कविवृन्दवन्द्यचरणः प्रबोधानन्दनामा न्यासीन्द्रः श्रीकृष्ण-चैतन्यस्य भगवतो मञ्जुमहिमपुञ्जोन्मत्तः स वयस्त्रिंशत्शततमेन ग्रन्थेन तं निजाभीष्टपादारविन्दं स्तोचयति तत्रैकेन पद्येन स्तुवन् सप्रयोजनं तस्य प्रादुर्भावं निरूपयति । स्तुमस्तमिति । तं व्रजपतिकुमारं स्तुमः कीदृशं चैतन्याकृतिं ।

**End.** तथापि वाग्भावात् स्वबाल्यचापल्यादयं मङ्गलो जनो यथा तथा जल्पतु तथापि स गौरहरिर्मे प्रसीदतु प्रीणातु कौतुकप्रियत्वात् ईश्वरस्य इति भावः ॥

× × × × × ×

तथा व्याख्यातवानस्मि दासयन्त्रोपमानकः ॥

**Colophon.** इति श्रीप्रबोधानन्दसरस्वतीविरचितस्य श्रीचैतन्यचन्द्रामृतस्य टीका चैतन्यचन्द्रामृततरङ्गिणी समाप्ता ॥

**विषयः ।** प्रबोधानन्दकृतचैतन्यचन्द्रामृतस्य व्याख्यानम् ॥

---

**No. 96.** छन्दोदीपः . Substance, country-made paper, 12 × 2½ inches. Folia, 10. Lines, 3 on a page. Extent, 375 çlokas. Character, Bengali. Date of composition, SK. 1700. Place of deposit, Dinajpur, Rājārāmpur, Paṇḍit Çyāmāprasanna Vācaspati. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

गौरीशं वाङ्मयं चैव प्रणम्य विदुषां मुदे
छन्दसां सारमाहृत्य छन्दोदीपः प्रतन्यते ।

छन्दोमञ्जर्य्यां ।

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्रा कृता भवेत् ।
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ॥

**End.** एकैवातिकृतिः प्रोक्ता ख्याता जीवपदात्तु या ।
षड्विंशत्यक्षराद्येका कविभिः कथितोत्कृतिः
छन्दःशास्त्रे तु विख्यातं सा भुजङ्गविजृम्भितं ।
उक्थादिषड्विंशतिसंज्ञकेषु
छन्दःसु भेदा विधुनेत्रचन्द्राः
समाहृताः पिङ्गलनागसम्मता
मुदं वितन्वन्तु सदा मनीषिणां ॥

**Colophon.** इति छन्दोदीपे प्रकीर्णकः प्रकाशः समाप्तश्चायं छन्दोदीप· ।
शाके शून्याभ्रसप्तक्षितिपरिगणिते श्रीनवद्वीपनाथं ।
नत्वं राजेन्द्रदेवं दक्षिणकक्षिवत्सं वाजपेयादियागैः ।
नत्वा तस्य द्वितीयः सुत इममखिलं सारमाकृष्य यत्ना-
च्छन्दोदीपं प्रदीपं निखिलबुधमनोध्वान्तराशेरपूर्व्वं ।
फाल्गुनीयविंशदिने प्रारब्धं शुभवत्सरे विधुवेदमिते सौयच्छन्दोदीपः
समाप्तः वाजपेयि-श्रीमन्महाराज-राजेन्द्राब्दाः पञ्चाशत्संख्यकाः ॥

विषयः । छन्दोनिरूपणम् ॥

---

**No. 97.** छान्दोग्योपनिषद्भाष्यम्. By आनन्दतीर्थ. Substance, country-made paper, 8×3 inches. Folia, 48. Lines, 12 on a page. Extent, 1,152 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Verse. Correct.

श्रीगुरुभ्यो नमः ।

**Beginning.** श्रीमदानन्दतीर्थभगवत्पादाचार्य्येभ्यो नमः ।
चतुर्द्विशिवदोषसत्सुखमयाशानेकतातप्रभा
सर्व्वप्राभवशक्तिभीमविभवसत्पानन्दविद्याकृतिं,

एहिक्यामुष्मिकशेषनित्यनियतिज्ञानप्रकाशादति
व्याप्तामोक्षविमोचदं वरिमवं नित्यं सदोपासते ॥'

**End.** आनन्दतीर्थ इति तु यस्य नाम द्वितीयकं ।
पूर्णप्रज्ञेन तेनेदं कृतं भाष्यं हरेः प्रियं ॥
नित्यानन्दो हरिः पूर्णो नित्यं संप्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

**Colophon.** इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये अष्टमोध्यायः ।

विषयः । माध्वमते छान्दोग्योपनिषद्व्याख्या ।

---

**No. 98.** छान्दोग्योपनिषद्भाष्यम् By सायनाचार्य्य. Substance, country-made paper, 14 × 5 inches. Folia, 114. Lines, 11 on a page. Extent, 5,016 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares, Paṇḍit Govinda Bhatta. Appearance, new. Prose. Correct.

**Beginning.** वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ।
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ।
तत् कटाक्षेण तद्रूपं दधत्बुक्कमहीपतिः ।
आदिशत् सायनाचार्य्यं वेदार्थस्य प्रकाशने ।
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायनाचार्य्यो वेदार्थं वक्तुमुद्यतः
सामवेदार्थमेषोच प्रकाशयति सादरं ।

**End.** ननु विकारे छान्दसे छिठि तनिपत्योश्छन्दसीत्युपधालोपः किञ्च वे घ्नो मधुघ्र्घ्नेघ्न शीकशीम स त्वं वशीव कवचीव चावक चतुरान् जयि, चपि या अम्मरश्मनि अस्मा चम्मरश्मनि चस्मा चम्मरश्मन् इति छन्दोगचक्रुषानां पाठभेदः. इति पञ्चमस्याध्यायस्य एकादशः खण्डः इति काकुभं समाप्तं ।

**Colophon.** वेदार्थस्य प्रकाशेन तमः हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमत्सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे छन्दोब्राह्मणे पञ्चमोऽध्यायः ।

विषयः । छान्दोग्योपनिषद्व्याख्या ।

---

**No. 99.** जन्मरहस्यं (भविष्यपुराणीयम्). Substance, country-made paper, 12×4 inches. Folia, 5. Lines, 7 on a page. Extent, 82 çlokas. Character, Bengali. Date, SK. 1,740. Place of deposit, Zilla Midnapur, Post Garveta Grām Khunverá, Late Paṇḍit Rámtáran Siromani. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

नारद उवाच ।

अस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
चन्द्रार्के गगने नष्टे ज्योतिषि प्रलयं गते ॥
अचिन्त्यभावमव्यक्तं योगनिद्रामुपागतं ।
नारदः परिपप्रच्छ भगवन्तं जनार्द्दनं ॥
केषु स्थानेषु द्रष्टव्यो भववंस्त्वं मया प्रभो ।
तन्मे कथय तत्त्वेन अनुग्राह्यो ह्यहं यदि ॥

श्रीभगवानुवाच ।

अहं ते कथयिष्यामि प्रादुर्भावं महामुने ।
यं पठित्वा द्विजाः सर्व्वे यास्यन्ति परमां गतिं ॥ इत्यादि ।

**End.** यः पठेत् प्रातरुत्थाय मम जन्मानुकीर्त्तनं ।
मर्त्त्यलोकं परित्यज्य मम लोकं स गच्छति ।
न च मृत्युभयं तस्य यः पठेन्मम कीर्त्तनम् ॥

**Colophon.** इति श्रीकृष्णनारदसंवादे भविष्यपुराणोक्तं जन्मरहस्यं समाप्तं ।
ॐ तत्सत् । शुभमस्तु शकाब्दाः १७४० ।

विषयः । भगवतोऽवतारनिचयकथनमुखेन श्रीकृष्णावतारस्य वृत्तान्तकीर्त्तनम् ।

---

**No. 100.** जलाशयोत्सर्गविधिः. Substance, country-made paper, 8×3 inches. Folia, 14. Lines, 9 on a page. Extent, 260 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ जलाशयोत्सर्गः ।

स चोदगयने माघादिपञ्चसु आषाढवर्जमासेषु वा शुक्लपक्षे द्वितीया-तृतीया-पञ्चमी-सप्तमी-दशमी-त्रयोदशी-पौर्णमासीषु तिथिषु बुधगुरुशुक्र-वारेषु रविसोमयोर्वेत्यादि ।

**End.** १०००-१०८-५०-२० वा विप्रान् संभोज्य भूयसीं दक्षिणां दत्त्वा कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुञ्जीत इति ।

**Colophon.** इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णात्मजकमलाकरभट्टकृतो जलाशयोत्सर्गप्रयोगः समाप्तः ।

विषयः । जलाशयानां उत्सर्गविधिः ।

---

**No. 101.** ( जातकपद्धतिटीका ) भावार्थमञ्जरी By अच्युत. Substance, country-made paper, 10 × 3 inches. Folia, 44 (without 4–32). Lines, 8 on a page. Extent,. 1,100 çlokas. Character, Bengali. Date, SK. 1571. Place of deposit Zilla Midnapur, Post office Garvetá Grām Khuverā, Late Pandit Rāmtaran S'iromani. Appearance, old. Prose. Correct.

**Beginning.** नमो वृन्दावनचन्द्राय ।

कमलदलदलायतनयनं परमं परमार्थविदां रघूणां ।
सजलजलदश्यामं रामं सलक्ष्मणं वन्दे ॥
श्रीमद्रामभट्टशेखरमणेः सत्कर्मपारां निधेः
सूनुः सागरचन्द्रमाः समजनि प्रख्यातकीर्त्तिच्छटः ।
नो दोषाकरतामुपैति न जडो नाङ्के × × लक्ष्यते
पूर्णश्चारुकलाभिरत्र कमलावेशं दधत्यद्भुतं ॥
व्याख्याताकाव्यसिन्धोरभिनवकवितापद्मिनीनां विकाशे
भास्वानुच्चैर्मभस्थानतिजव × × × प्राकृतानां कृतानां ।
न्याये व्याप्तकृती कृती कृतधियामुच्चैर्विधाने विधि-
र्भक्तः श्रीरघुनाथपादयुगले श्रीसागरः × × × ॥
भावाभावविचारे जातकविहिते × × × तत् सूनुः ।
ज्ञानी श्रीपतिटीकां कुरुते भट्टाच्युतः श्रीमान् ॥ (?)
श्रीपतिव्याख्यातावच्युतविहितालङ्कृता नवीनापि ।
भावार्थमञ्जरीयं दयिता भावार्थविद्भिः-भविता ॥
श्रीमिश्चिराचार्य्याच्युतभट्टेन श्रीपतिकृतजातकपद्धतिविवरणमारभ्यते इत्यादि ।

**End.** इदमेव प्रयोजनं ग्रन्थकारेण पूर्व्वग्रन्थानुसारेणोक्तं किन्तु सप्तवर्गेऽप्यंशै-रेतत् ज्ञातव्यं। खोचे रूपं चरणविधिचितेमित्यादिप्रकारेण शुभं बुद्धा अनयोर्यदधिकं तदपफलं ग्रहः परिपाचयति। शुभाधिक्ये शुभं अशुभाधिक्ये अशुभमिति।

इत्थं गौतमगोत्रेण तीयुताच्युतशर्म्मणा।
कृतं श्रीपतिपद्धत्यां चतुर्थाध्यायवर्णनम्॥

**Colophon.** इति पचेष्टकाध्यायविवरणं चतुर्थः।
शाकेऽगाश्वबाणेन्दौ १५७१ ध्यात्वा कृष्णपदाम्बुजं।
लिखेत श्रीमच्चादेवेष्टकाद्याच्युत शर्म्मणः॥ ?

विषयः। श्रीपतिभट्टकृतजातकपद्धतेर्विवरणम्।

---

**No. 102.** जिनचैत्यनमस्कारः. Substance, country-made paper, 11 × 4½ inches. Folia, 2. Lines 11 on a page. Extent, 44 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, new. Verse. Incorrect.

**Beginning.** स (...) न्या देवलोके रविशशिभवने व्यन्तराणां निकाये।
नक्षत्राणां निवासे ग्रहगणपटले तारकाणां विमाने।
पाताले वा नगेन्द्रे स्फुटमणिकिरणे ध्वस्तसान्द्रान्धकारे,
श्रीमत्तीर्थंकराणां प्रतिदिवसमहं तत्र चैत्यानि वन्दे।

**End.** तेषां श्रीतीर्थयात्राफलमतुलमलं जायते मानवानां
कार्य्यं सिद्धिस्तथोच्चैःप्रभृति च सततं चित्तमानन्दकारे।

**Colophon.** इति श्रीजिनचैत्यनमस्कारः समाप्तः।

विषयः। जैनतीर्थंकरचैत्यनमस्कारकथनम्।

---

**No. 103.** जीवत्पितृककर्त्तव्यनिर्णयः By बालकृष्णभट्ट. Substance, country-made paper, 8 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 150 çlokas. Character, Nāgara. Date, SN. 1785. Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct

**Beginning.** श्रीगणेशाय नमः।
सत्पद्मचक्रादियुतं प्रसन्नं पीताम्बरं कौस्तुभभूषिताङ्गं
यशोदयालिङ्गितपूर्वदेहं सत्यव्रतं कृष्णमहं भजामि।

End. श्रीबालकृष्णरचितात् जीवत्पितृकनिर्णयात्
भागीरथीमौक्तिमालः प्रभुस्तुष्यति सर्व्वदा ।

Colophon. इति श्रीमहाग्निजिभट्ट तत्नबालकृष्णभट्टविरचितो जीवत्पितृककर्त्तव्य-निर्णयः समाप्तः । संवत् १८८५ ।

विषयः । जीवत्पितृककर्त्तव्यकथनम् ।

---

No. 104. ज्ञानरत्नकोशः. Substance, country-made paper, 11 × 3 inches. Folia, 137. Lines, 7 on a page. Extent, 2,000 çlokás. Character, Bengali. Date SM 1847 Place of deposit, Calcutta, Viçvakoṣa office, Babu Nagendranath Basu. Appearance, fresh. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः ।
अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्व्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥
चतुर्मुखमुखाम्भोजवनहंसवधू र्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥

श्रीविश्वकर्म्मोवाच ।

अतोऽत्र ब्राह्मणो भूमीरक्ता वै क्षत्रिया स्मृता
पीतवर्णा भवेद्वैश्या शूद्रा कृष्णानुवर्णिनी । इत्यादि ।

End. विंशत्यासनकनिष्ठानि ज्येष्ठां तदांशवर्ज्जिता,
एकमाद्दौ भवेन्मानं त्रिविधं मानमेव हि ।
आसनस्थोद्भवा क्षीणा क्रमेणापि क्रमोद्भवा ।
स्थितासनकेशान्तप्रमाणमेव सम्मतं ।

Colophon. इति श्रीअपराजितपृच्छायां प्रतिमाप्रमाणं द्विशताग्रे नवमसूत्रं समाप्तं ॥ संवत १८४७ ॥

विषयः । सवर्णादिनिरूपणम् ॥ महापीठलक्षणादिकथनम् ॥ चतुष्प्रकारपीठलक्षणकथनम् ॥ प्रासादमानकरणादिनिरूपणम् ॥ वर्द्धमानाष्टमण्डपनिरूपणम् ॥ मण्डपलक्षणादिकथनम् ॥ द्वारमानादिकथनम् ॥ प्रतिमाप्रमाणादिकथनम् ॥

---

**No. 105.** ज्ञापकसमुच्चयः By **पुरुषोत्तमदेव.** Substance, country-made paper, 10×4 inches. Folia, 60. Lines, 4 on a page. Extent 500 çlokas. Character, Bengali. Date? Place of deposit, Bhāṇḍārapur, Dist. Vaguḍā, Babu Kāliçarana Cakravartti. Appearance old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

यत्नेन परिभाषाणां वृत्तिं वृद्धसुसम्मतां ।
पुरुषोत्तम आरेभे स ज्ञापकसमुच्चयं
तरप्तमब्विधावेतौ सदिति न ततो यस्मादीयसः ? × × × × इति
वा यत्नाये प्रकर्षापकर्षे तरप्तमपौ स्त इति ज्ञापयति प्रकर्षार्थमन्तरे-
णापि क्वचित् स्वार्थे तरबस्तीति ।

**End.** अ अ इति शास्त्रान्ते विवृतप्रत्याभिवचनं ज्ञापयति व्याकरण-
प्रक्रियायामकारस्य विवृतोपदेशः । आकारग्रहणेनार्थ इति ॥

**Colophon.** इति श्रीमहामहोपाध्याय-श्रीपुरुषोत्तमदेव-विरचिते ज्ञापकसमुच्चये ऽष्टमो-
ऽध्यायः ॥ समाप्तश्चेदं पुस्तकम् ॥

विषयः । संक्षेपतः पाणिनीयप्रत्ययादिकथनम् ।

---

**No. 106.** ज्योतिष्कणिका By कृष्णानन्दचक्रवर्त्ती. Substance, country-made paper, 12×3 inches. Folia, 70 Lines, 6 on a page. Extent, 1,200 çlokas. Character, Bengali Date SK. 1687. Place of deposit, Balihār Rājadhāni, Babu Varadakānta Cakravartti. Appearance, tolerable. Prose and Verse. Generally correct

**Beginning.** ॐ श्रीगुरवे नमः ।

नमामि परमात्मानम् सर्व्वलोकेश्वरेश्वरं ।
अविचिन्त्यमहाशक्तिं भक्तिकारुण्यवारिधिं ॥
असत्यमपि संसारं यद्भक्तिः सत्यतां नयेत् ।
× × × × × ×
ये जना यदि लग्नादि सम्यग्ज्ञातुमिच्छथ ।
सुज्योतिष्कणिका यत्नात् गृह्यतां कर्मपावनी ॥
समालोच्य बहुग्रन्थान् कृता श्रीकृष्णशर्म्मणा ।
सुगमा स्वल्पबुद्धीनां झटिति ज्ञानहेतवे ।

॥ अथ राशिसंज्ञा ॥

मेष-वृष-मिथुन-कर्कट-सिंहाः ...

... ... इति च राशयः कथिताः ।

१ सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगं

तदर्कांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥ इत्यादि ।

End. ॐ समम्वेति प्रत्येकस्यार्पनक्रमेण विसृज्य अच्छिद्रावधारणम् कुर्य्यात् इति नवग्रहपूजापद्धतिः ॥ इति ज्योतिष्कणिकायामष्टमः परिच्छेदः ॥

ज्योतिःशास्त्रमहार्णवसाधनानि बहूशः सन्ति प्रशस्तानि मे

सन्तो मत्कृतिमल्पिकामपि वरिष्यन्ते गुणग्राहिणः ।

अम्भोधौ परिलब्धरत्ननिवहेष्वास्येव एवम्बिधं

यत् कुत्रेपि तदैव रत्नममलं लब्ध्वाप्युपेक्षिष्यते ।

श्रीविक्रमादित्यचम्पकयष्टिश्रीकृष्णशर्म्मा चक्रवर्त्ती ।

चकार यत्नात् सुगमं कृतीनामज्ञप्रबोधार्थमिमं निबन्धं ॥

Colophon. इति श्रीकृष्णानन्दचक्रवर्त्तिविरचिता ज्योतिष्कणिका समाप्ता ॥ श्रीकृष्णगोविन्दशर्म्मणः पुस्तकमिदं शकाब्दाः १६८१ ॥

विषयः । राशिसंज्ञाकथनम् ॥ राशिनक्षत्रविभागकथनम् ॥ राश्युदयसम्प्रमानादिकथनम् ॥ द्रेक्काणादिकथनम् । नवांशादिकथनम् ॥ दिक्पतिकथनम् ॥ ग्रहाणां शत्रुमित्रादिकथनम् ॥ ग्रहसञ्चारशुभाशुभफलकथनम् ॥ नक्षत्राधिपादिकथनम् ॥ रिष्टिफलादिकथनम् ॥ योगादिकथनम् ॥ वारवेलाकालवेलादिकथनम् ॥ रव्यादिशुद्धिकथनम् । कालशुद्धिकथनम् । विवाहविहितनक्षत्रादिकथनम् ॥ गर्भाधानविहितनक्षत्रादिकथनम् ॥ पुंसवनादिविहितनक्षत्रकथनम् ॥ बीजवपनादिविहितदिनादिकथनम् ॥ लग्नकथनम् ॥ अभिजित्क्षणकथनम् । उपायोगादिकथनम् ॥ संक्रान्तिनिरूपणम् ॥ वास्त्वादिनिरूपणम् ॥ रिष्टिभङ्गादिकथनम् । रव्यादीनां भोग्यवर्षादिकथनम् ॥ नवग्रहपूजादिकथनम् ॥

---

**No. 107.** ज्योतिःसंक्षेपः By कृष्णदासशर्म्मा. Substance, country-made paper, 18×3 inches. Folia, 46 Lines, 6 on a page. Extent, 1,150 çlokas. Character, Bengali. Date SK. 1725. Place of deposit, Balihār Dist Rājasāhi, Paṇḍit Kālī Çandra Bhaṭṭācārya. Appearance, tolerable. Prose and Verse. Correct.

Beginning. ॐ नमो गणेशाय ।

यस्मादन्ते ब्रह्माणि दैवतानि तेजः स्वरूपेण सदा वसन्ति ।

सर्व्वात्मकं कारणमीश्वरं तं मुक्तिप्रदं सूर्य्यमहं नमामि ॥

गुरुं मनोहरदेवाख्य श्रीकृष्णदासशर्म्मणा ।
अभ्यासार्थं बालकानां ज्योतिःसंक्षेप उच्यते ॥
तत्र प्रथमतो वक्ष्ये वारादीनां स्वरूपकं ।
× × × × × ×
उदयादोदयं भानोर्भौमसावनवासराः ।
इति सूर्य्यसिद्धान्तोक्तेः सूर्य्योदयावधि सूर्य्योदयान्तरं यावत् दिनाधिपस्य रव्यादेर्भोग्यो दिवारात्रिस्वरूपः षष्टिदण्डात्मकः कालो वार इति ।

End. अथ यात्राप्रत्यागमनं ।
तिथावरिक्ते शुभदे सुचन्द्रे
पापेषु केन्द्राष्टमवर्ज्जितेषु ।
ग्राम्ये स्थिरे वा जनिते सुलग्न
गृहं विशेत् यानविवृत्तभूपः ।
श्रुत्युक्ताचारयुक्तो दिनपुरविषयो योऽस्ति लब्धप्रतिष्ठ-
स्तन्मूलग्रामवासी द्विजगुरुविबुधप्रीतिदः सुप्रतिष्ठः ।
नानाशास्त्रार्थदानप्रथितपृथुयशाश्चक्रवर्त्त्युपाधि-
र्विरेन्द्रः सत्कुलाढ्यो जयति पटुवरः श्रीयुतो रामचन्द्रः ॥
सुतस्तदीयो द्विजकृष्णदासः ।
प्रणम्य पित्रोश्चरणारविन्दं
बालावबोधार्थममुं चकार
ग्रन्थं ततो नोपहसन्तु विज्ञाः ॥

Colophon. इति श्रीयुतरामचन्द्रचक्रवर्त्ति-तनय-श्रीकृष्णदासशर्म्म-विरचितो ज्योतिः संक्षेपः समाप्तः ॥
रामप्राक्सुन्दरेणाग्रुगदचनमनोज्ञाक्षरग्राचलेके
शाके लेखीतमेनं ध्वठिति सुघटमा तत्तु नत्वाचलेके ।
× × × × × × । १७२५ । ३ । ५ । २० ॥

विषयः । वारादिकथनम् ॥ वारफलादिकथनम् । वारवेलादिकथनम् । तिथ्यादिनिरूपणम् । नक्षत्राधिपादिकथनम् । राश्यादिनिरूपणम् ॥ लग्नादिनिर्णयः । षड्वर्गादिकथनम् । नक्षत्रशूलादिकथनम् ॥ संक्रान्तिनिरूपणम् । शनिराहुचक्रादिकथनम् । गण्डादिनिरूपणम् । विवाहविहितनक्षत्रादिकथनम् । द्विरागमनादिकथनम् । पुंसवन-सीमन्तोन्नयन-जातकर्म्मोपनयनादिसंस्कारकर्म्मविहितदिनादिनिरूपणम् ॥ यात्रिकदिनादिकथनम् ॥

**No. 108.** ज्योतिःसंक्षेपसारः (खण्डितः) By कृष्णचन्द्र. Substance, country-made paper, 12 x 3 inches. Folia, 6. Lines, 5 on a page. Extent, 90 çlokas. Character, Bengali. Date ?. Place of deposit, Upalatá Grám, Post Mehár, Zilla Comilla. Pandit Jagadbandhu Tarkavágis. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः शिवाय।

प्रणम्य नव रव्यादीन् कृष्णचन्द्रेण शर्म्मणा।
ज्योतिःसंक्षेपसारोऽयं तन्यते बालकप्रियः॥
अथदिननिर्णयः।
रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः।
एतेषां नामतो वाराः सप्तैव कथिताः क्रमात्॥ इत्यादि।
रिष्टिं भुजङ्गमाकारां केचिदिच्छन्ति सूरयः।
भुजङ्गस्य मुखे मृत्युर्न तु पुच्छे कदाचन॥
आनने पञ्चनाड्यस्तु वक्षःस्थाने चतुर्दश।
क्रोडे चाष्टौ तथा ज्ञेयः पुच्छ मिश्रः प्रकीर्त्तिताः॥
आनने धननाशः स्याद्वक्षःस्थाने महाभयं॥
(अतः परं खण्डितं।)

विषयः। संक्षेपतो ज्योतिर्वचनसङ्ग्रहः।

---

**No. 109.** ज्योतीरहस्यं By हरिहरन्यायालङ्कार. Substance, country-made paper, 13 x 2 inches. Folia, 46. Lines, 5 on a page. Extent, 640 çlokas. Character, Bengali. Date SK. 1592. Place of deposit, Dinajpur, Babū Giriçacandra Cakravartti. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमस्तारिण्यै।

सृष्टिस्थितिप्रलयहेतुरहेतुरीशो
विश्वस्य यस्तमभिवन्द्य जगत्कृते च।
ज्योतिःसमुद्रमरणे तरणिं नमोमि
ज्योतीरहस्यममलं सुधमश्च धीरः॥
ज्योतिर्विदः पुढकरो विनयं विधाय
श्रीमाधवं हरिहरः प्रतिपादयामि
× × × × × ×

काल्लाङ्गवाणावनिभिश्च युक्तः
शाको भवेदब्द इह प्रबन्धे ।
काल्लाङ्गवाणावनितोऽपि युक्त-
स्तदाब्दमुख्येश्वमितोऽत्र योज्यः ॥ इत्यादि ।

End. अस्मं खण्डितं ॥ ॥

विषयः । अब्दाद्यहर्गणनम् ॥ अहर्गणनादिकथनम् ॥ सर्व्वग्रहाणां स्फुटानयनम् ॥ ग्रहाणां भुक्त्यानयनम् ॥ दिवसपञ्चाङ्गानयनम् ॥ दिनमानाद्यर्थकथनम् ॥ चन्द्रादीनां दिनादिभुक्तिप्रकटनम् ॥ अतःपरं खण्डितं ॥

---

No. 110. ज्योतिःसारसंग्रहः By श्रीपति. Substance, country-made paper, 14 × 4 inches. Folia, 280. Lines, 7 on a page. Extent, 6,800 çlokas. Character, Bengali. Date ? Place of deposit, Dinajpur, Rājārāmapur. Pandit Çyāmāprasanna Vācaspati. Appearance, old. Verse. Incorrect.

Beginning. ॐ सूर्य्याय नमः ।

श्रीरामं श्रीपतिं नत्वा श्रीमत्श्रीपतिशर्म्मणा ।
क्रियते सुखबोधाय ज्योतिषां सारसंग्रहः ॥
अथ कालपुरुषस्याङ्गविभागः ॥
शीर्षमुखबाहुहृदयोदराणि कटिवस्तिगुह्यसंज्ञकानि ।
उरुजानुजङ्घे चरणाविति राश्योऽश्वाद्याः ॥
अथ मेषादयो यथासंख्यं कालपुरुषस्य शीर्षादयः स्युः वस्तिर्नाभेरधो भागः । मेषाद्या इति यदुक्तं तदुपलक्षणं । किन्तु जातकस्य लग्नादेव शीर्षादयः कल्प्या इति ॥ इत्यादि ।

End. रविबुधशुक्रजीवैः सप्तमः । रविबुधजीवशौरैरष्टमः । रविबुधशुक्रशौरैर्नवमः । रविजीवशुक्रशनैर्दशमः । भौमबुधजीवशुक्रैरेकादशः । अतःपरं खण्डितं ॥

विषयः । कालपुरुषस्याङ्गविभागकथनम् ॥ राशिनिर्णयः ॥ राशिदेवतादिकथनम् ॥ सामान्यविशेषादिराशिसंज्ञाकथनम् ॥ लग्नमानादिकथनम् ॥ ग्रहभोगकालादिकथनम् ॥ ग्रहसंज्ञादिकथनम् ॥ आत्मादिपादिकथनम् ॥ अनफादियोगादिकथनम् ॥ उत्पातादिकथनम् ॥ करकादियोगकथनम् ॥ पापयोगापवादकथनम् । मासदग्धादिकथनम् ॥ सामान्ययोगादिकथनम् ॥ नक्षत्रनिर्णयः । नक्षत्रदेवतादिकथनम् ॥ अर्द्धमुखपार्श्वादिमुखकथनम् ॥ भद्राकार-

निर्णयः । योगादिप्रतीकारकथनम् ॥ वारादिकथनम् ॥ शुभपक्षस्थितिपक्षादिकथनम् ॥ निरंशादिदिननिषेधकथनम् ॥ मलमासागतादिनिषेधकथनम् ॥ कालशुद्धिकथनम् । विविधोत्पातशान्त्यादिकथनम् । मनुष्योत्पातशान्त्यादिकथनम् । राहुदर्शनविचारः । ग्रहास्तिचारादिकथनम् । विवाहनिषेधकालादिकथनम् ॥ यामित्रादिवेधकथनम् ॥ चन्द्रशुद्ध्यादिकथनम् ॥ संक्रान्तिनिर्णयः । जन्मनक्षत्रजन्मतिथिफलं तथा वारादिफलञ्च ॥ सामान्यतो ग्रहशुद्धिकथनम् । षड्वर्गशुद्ध्यादिकथनम् ॥ जन्मनक्षत्रे ग्रहदर्शनादिनिषेधकथनम् । उदयास्तादिग्रहणफलं ॥ उल्कादिपतनफलं ॥ उपग्रहादिनिर्णयः । व्रतपट्चक्रकथनम् ॥ विवाहकालादिकथनम् ॥ योटकविचारः ॥ अन्नप्राशनचूडोपनयनादिकालकथनम् ॥ यात्राविहितकालादिकथनम् ॥ कृषिकर्म्मकथनम् ॥ वास्तुप्रकरणम् । शल्योद्धारकथनम् ॥ दिक्पालपूजाविधिप्रयोगादिकथनम् ॥ कार्त्तिकादिवर्षज्ञानम् ॥ चोराभिजितफलकथनम् ॥ अयनांशादिविचारः । स्वप्नफलकथनम् ॥ शकुनप्रकरणं ॥ जातकप्रकरणं ॥ जन्मलग्नादिफलकथनम् ॥ तुङ्गादिफलकथनम् ॥ सूर्य्यादिरिष्टिकथनम् ॥ भावफलादिकथनम् ॥ पञ्चस्वरामते योगरिष्ट्यादिकथनम् ॥ आयुर्दशान्तर्दशादिनिरूपणम् ।

---

**No. 111.** ज्योतिःसारः By धर्म्मखान. Substance, country-made paper, 18×3 inches. Folia, 67. Lines, 5 on a page. Extent, 980 çlokas. Character, Bengali. Date S K. 1670. Place of deposit, Dinajpur, Pandit Krṣṇadāsa Smṛtibhūṣaṇa. Appearance, tolerable. Verse. Incorrect.

**Beginning.** श्रीकृष्णचन्द्रचरणकमलभक्ताय शाश्वते

नमो जगत् सद्य ? गद् वनं मलाजं जगदन्तकं ।

पूर्व्वशास्त्रं समाहृत्य ज्योतिःसारं ब्रवे भुवं

आत्मजेनातियत्नेन प्रेरितोऽत्र क्रमेण तु ।

संक्षेपव्यवहारार्थं सोऽयं व्यावर्त्तुमुत्सहे ।

अथ दिनलक्षणं ॥

आदौ वारस्तिथिः पश्चात् नक्षत्रं तदनन्तरं ।

करणञ्च तथा योगो दिनं स्यात् पञ्चलक्षणम् ॥

**End.** रोहिणीमृगशूलाख्यं तथा भाद्रपदाद्वयं

पुष्याश्लेषोत्तराषाढाफल्गुनी संयुता तथा

विशाखे सर्व्ववस्तूनां अनुराधा तथा परा

भवन्ति सर्व्वलाभाय श्रीवराहोदितं यथा ॥

इति ज्योतिःसारे नवमः परिच्छेदः समाप्तः ।

Colophon. गजर्ष्यार्णवषिन्धनीरजमिते संवत्सरे निर्मले
मासे माधवसंज्ञके सदुधियः सन्तोषदं ज्ञानदं ।
पुत्रप्रेमभरादिमं व्यरचयत् ग्रन्थं प्रयत्नात् स्वयं ।
गाठाभूषणसिंहवंशप्रभवः श्रीधर्मचन्द्रः सुधीः ॥
शकाब्दाः १६७० ॐ गुरवे नमः ॥

विषयः । १ पः दिन-वार-नक्षत्रादिनिरूपणम् । तिथ्यादिकथनम् । राश्यादिनिरूपणम् । २ पः वारवेलाकालराश्यादिकथनम् । नन्दादितिथिकथनम् । योगादिकथनम् । ३ पः ग्रहगोचरादिफलकथनम् । ४ पः नववध्वागमनादिदृशज्ञानकप्रकरणं । ५, ६, ७ पः विवाहादिनिमित्तनक्षत्रादिनिरूपणम् । यात्रादिनिरूपणञ्च । ८ पः कृषिकर्मवास्तुप्रकरणं ९ पः वर्षाधिपादिकथनम् ॥

---

**No. 112.** ठाणाङ्ग सूत्रवृत्तिः By अभयदेव. Substance, country-made paper, 11×4½ inches. Folia, 262. Lines, 17 on a page. Extent, 11,124 çlokas. Character, Nagara. Date ? Place of deposit, Benares, Dikmandālācary-Mahāraja Bālacandra. Appearance, old. Prose. Incorrect.

Beginning. अस्य प्रथमतः १५ पत्राणि न सन्ति ।
यथा इन्द्रो भावेन्द्रकारणतां प्रतिपद्यते तथा प्रयोगापेक्षायामपि तदुपयोगतामासादयत्यथाप्रर्वाञ्च न तथा नाम्नस्य (...) न्द्राविव्यर्थ विशेष इति ।

End. तदेवं निगमितमनुगमद्वारांशभूतं सूत्रस्पर्शिकनिर्युक्तिद्वारं शेषद्वाराणि तु सर्व्वाध्ययनेषु प्रथमाध्ययनवत् अनुगमनीयानीति ।

Colophon. श्रीमदभयदेवसूरिविरचिते स्थानाख्यतृतीयाङ्गविवरणे दशस्थानकाख्यं दशमाध्ययनं समाप्तम् ।

विषयः । ठाणाङ्गसूत्रव्याख्या ।

---

**No. 113.** ठाणसागरः. Substance, country-made paper, 11×4½ inches. Folia, 225. Lines, 10 on a page. Extent, 4,500 çlokas. Character, Nagara. Date SM. 1846. Place of deposit, Benares, Dikmandalācāryya Mahārāja Bālacandra. Appearance, old. Verse. Correct.

Beginning. दुहा आसायरी ।
श्रीजिन आदि जिनन्दय आदितन उकरतार,
युगलाधरमनिवारणउ, वरतावण विवहार ।

**End.** हरिवंश गायो प्रभव पायो ज्ञानबुद्धि प्रकाशनो,
पापकठ(भयो)माठो पूर्ण भायो भा .
कारणपुन कलन कमला पदन सुनत सुखाशनो,
पुन्य शेगुण सुरजं परसादराज बखमनो ;

**Colophon.** इति श्रीलालसागरहरिवंशप्रबन्धे नवमोधिकारः सम्पूर्णः । संवत् १८४६ ।

**विषयः ।** हिन्दीभाषया हरिवंशकथनम् ।

---

No. 115. शक्कारप्रदीपः सटीकः By सरस्वतीकण्ठाभरण. Substance, country-made paper, 12 × 3½ inches, Folia, 5. Lines, 9 on a page. Extent, 200 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, post Garvetá, Gram Khunverā, Babu Vaikuṇṭhanath Cakravarti. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ कार्ष्णी ।
विरिञ्चिवागीशकवीन्द्रमुख्या
यामम्बुराशिं यदनुग्रहेण ।
सुदुस्तरं गोष्पदवत् तरन्ति
वाग्देवतां तां प्रणमामि नित्यं ॥
मूर्द्धण्यवर्गान्त्यगताश्च शब्दाः
स्वभावसिद्धाः श्रुतिभिर्य उक्ताः ।
बालावबोधाय सतां मुदे च
प्रदीपवत्तानिह दर्शयामि ॥
वर्णीयसां यत्स्वपि शासनेषु नष्टे न कार्ये मयतानुपेक्षा ।
भ्रतोस्वमः × × × × प्रकामं न किं प्रदीपे भवति प्रयत्नः ।
वाणी-गणेशा गुण-गोष्ठि-बाणासुरीर-वेणी धुणरेणु-घोणाः ।
माणिक्य-वीणा-प्रण-प्राण-शोणाः सर्किङ्किणीकाः कण-काण-कोणाः ॥ इत्यादि

**End.** कृत्वा चरणौ सरस्वत्याः कण्ठाभरणः श्रीमान् ।
नित्यकृतणकारप्रदीपटीकां समापहे ॥

**Beginning of Comm:** ग्रन्थारम्भे शिष्टपरम्पराप्राप्ततया विघ्नविनाशाय × × × × ×
प्रख्यातेन शास्त्रकृत् तुणम् ग्रन्थकारो वाग्धिष्ठातृदेवतां प्रणमति
विरिञ्चीत्यादि ।

**Colophon.** प्रदीपव्याख्याकारं सरस्वतीकण्ठाभरणः श्रीमान् ।
हरिकुलहृदयकुतूहलकलाकलापात् सुखं व्यनक्ति ॥
इति श्रीसरस्वतीकृतौ णकार प्रदीपः समाप्तः ॥
इदानीं पूर्व्वोक्तामुपसंहरति । सरस्वती कण्ठाभरणं यस्य स णकारः
प्रदीप इव व्यक्तीकरोति व्यनक्ति विपूर्व्वादनजधातो र्लटि रूपं । इति
श्रीकण्ठाभरणसरस्वतीकृता णकारप्रदीपटीका समाप्ता ॥

विषयः । मूर्द्धण्यणकारवच्छब्दानां संग्रहः ।

---

**No. 116.** तत्त्वचिन्तामण्यालोकपरिशिष्टं By देवनाथ. Substance, country-made paper, 14 × 2 inches. Folia, 143. Lines, 6 on a page. Extent, 4,000 çlokas. Character Bengali. Date L.S. 443. Place of deposit, Dinajpur Babu Girisa Candra Cakravarti (Vakil). Appearance, very old. Prose. Generally correct.

**Beginning.** ॐ नमः कृष्णाय ।

चरविकटजटान्तस्तुङ्गगङ्गान्तरङ्ग-
व्यतिकरितभवानीकेशवेणीत्रिवेणी ।
जनयतु मनसो मे गाहमानस्य गूढं
विपदपनयदीक्षासाक्षिणी मङ्गलानि ॥
देवनाथेन गोविन्दचरणाम्बुजसेविना ।
चिन्तामणौ यदालोके परिशिष्टं तदुच्यते ॥
समाप्तिहेतुतामिति निष्फलाचरणं मा प्रसज्यतामित्युपोद्घात एव सङ्गति-
रिति कश्चित् ॥ खल्विति यद्यपि निषेधे वाक्यभूषायां खलु स्यादवधारण
इत्यभिधानाद्वाक्यालङ्कारशङ्कायपि तस्य विशेषस्योपस्थितिं विना नान्वय-
सम्भवः तथापि चन्द्रादिपदवत् भिन्नैव व्युत्पत्तिरस्येति तत्वं वस्तुतः
कालिकविचारविषयत्वमेवालङ्कारः । न तावदित्यादौ तावत् पदवदिति
बोद्धव्यं शब्द एवालङ्कार इति कश्चित् । ननु सकलसम्प्रतिपत्तीनामेवाच
समाधानाभावात् कथं तासामाचारहेतुत्वं किञ्च कस्यचित् काचित्
संप्रतिपत्तिरपि नेत्यत आह अविप्रतिपत्तिरिति । यद्यपि समाप्तेः
प्रस्तुतत्वेन तत्परत्वमेवोक्तं, कारणताकारस्य मङ्गलेऽन्वयव्यतिरेकगम्यत्वात्
तथापि विचारस्यापि प्रस्तुतत्वमेव अतएव सादृश्यं प्रमाकरणमित्यादौ

तद्देवार्थ इति भावः ॥ वस्तुतः कारणताग्राहके व्यभिचारानुपालम्भे भवत्येवेति बाध इत्यन्यथा व्याघाते तवेति ॥

**End.** किञ्चाभावाभावत्वं प्रतियोगित्वमज्ञातमेव प्रकारत्वं नकारं तत्प्रत्ययाभावात् किञ्चाज्ञातस्याभावस्याप्रकारत्वेऽप्रसिद्धसाध्यकत्वमिति × × × × × × × अभावत्वज्ञानाभावात् अनुमितेरालोचनत्वायोगात् इति दिक् । यदपि विशेषणज्ञानत्वेनाधिकरणज्ञानादीनां साधारण्येन कारणता तत्त्वसाधारणीति तदपि न, अन्वयव्यतिरेकेणाधिकरणज्ञानत्वादिनैव हेतुत्वात् । अन्यथाधिकरणाद्यविशेषणकाभावत्वादिविशेषणान्तरविशिष्टबुद्धेरपि प्रसङ्गात् । ... ... ... ... वस्तुतस्त्विति । अवच्छेदपदव्याप्तिविषयत्वानियतमित्यन्वयः । यथेत्यादि दृष्टान्तः । संयोगावच्छेदको व्याप्यवच्छेदकश्च इति द्वन्द्वः । अवच्छेदकज्ञानानन्तरमवच्छेद्यज्ञानात् तद्विषयत्वानियमतेति भावः । तदवच्छेदकमिति शून्यत्वरूपविशेषणावच्छेदकमित्यर्थः । यद्वा स्वानधिकरणव्याप्तत्वबोधजनकतावच्छेदकमित्यर्थः । एवञ्च प्रतियोगितावच्छेदकेत्यत्र निरवच्छिन्नत्वमिति पाठः ? । अनुद्देश्येति दक्षौत्यादौ साध्यत्वेनानुद्देश्यायामदन्त्याप्तिरित्यर्थः ॥ अवच्छिन्नत्वेन व्याप्तत्वेन तथा च यद्व्यक्तितयेत्याद्यधिकमित्यर्थः ॥

पक्षपातममत्वाभ्यां विहाय गुरुगौरवं ।
देवनाथो यथावस्तु परिशिष्टमचिन्तयत् ॥

**Colophon.** ल सं ४४१ चैत्र वदि एकादश्यां चन्द्रे महामहोठक्कुर श्रीदेवनाथमहाशयानुज्ञासमात् राघवेन लिखितं ॥

**विषयः ।** चिन्तामण्यालोकानुक्तपदार्थनिर्वचनम् ॥

---

**No. 117.** तत्त्वप्रकाशिकाविवरणम् By जयतीर्थ. Substance, country-made paper, $10 \times 2\frac{1}{2}$ inches. Folia, 25. Lines, 5 on a page Extent, 350 çlokas. Character, Nagara. Date ? Place of deposit, Tıkāri, District Gayā, Pandit Çāstri. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ श्रीवेदव्यासाय नमः ।

रमाया रमणं नत्वा गुणमाणिक्यमव्ययं ।
तत्त्वप्रकाशिकाव्याख्यां करिष्यामो यथामति ॥
परमात्मनोऽत्यन्तभिन्नस्य सतश्चिदानन्दाद्यात्मकस्यापि जीवस्यानाद्यविद्या-

कामकर्म्मादिनिमित्तोयं परमार्थं स्वाम्यधःकारी दुःखाद्यनर्थो न परमेश्वर-प्रसादादृतेऽपगच्छति न चासावात्मतोऽसौ प्रतीदति न चाविदितस्वरूपः शक्यते साक्षात् कर्त्तुमिति । इत्यादि ।

**End.** आनन्दः स्वरूपमात्रेण पुरुषार्थ इत्यतो नित्यानन्देति विशेषणं । भोजनं भोग अन्नभव इति यावत् ।

सदा सुरशिरोरत्नप्रभामुषि नखत्विषि ।

कमलाकमितुः पादपद्मे रतिरस्तु मे ॥

**Colophon** इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्यविरचित-तत्त्वप्रकाशिकाविवरणं जय-तीर्थभिक्षुविरचितं समाप्तं ॥

विषय । आनन्दतीर्थकृतोपाधिखण्डनस्य व्याख्यानम् ॥

---

No. 118. तत्त्वविवेकटीका By जयतीर्थ. Substance, country-made paper, $10 \times 2\frac{1}{3}$ inches. Folia, 13. Lines, 5 on a page. Extent, 260 çlokas. Character Nagara. Date ? Place of deposit, Tikāri, District Gayā, Paṇḍit Çāstri. Appearance, tolerable. Prose. Correct.

**Beginning.** प्रणम्य रमणं लक्ष्म्याः पूर्णबोधान् गुरूनपि ।

व्याख्यां तत्त्वविवेकस्य करिष्यामो यथामति ॥

ननु परमपुरुषादितत्त्वानां विवेकः शास्त्रे

एव कृतत्वात् किमनेन प्रकरणेन ॥ इत्यादि

**End.** तथापि परमपुरुषाधीनतयावगतं भवत्येव मोक्षसाधनमित्येतत् द्वे विद्ये वेदितव्ये इत्यादि श्रुतिसिद्धमिति चि शब्देन सूचयति ॥

करतलमिलितामलकप्रख्यं यस्याखिलं विश्वं ।

कमलापरिदृढममलं वन्दे तं वन्द्यपदाब्जम् ॥

**Colophon.** इति श्रीमदानन्दतीर्थभगवत्पादोदाहृततत्त्वविवरणं जयतीर्थभिक्षुविरचितं समाप्तम् ।

पुरे वाराणसीक्षेत्रे विन्दुमाधवसन्निधौ ।

पीताम्बरेण लिखितं रमामाधवप्रीतये ॥

विषयः । आनन्दतीर्थकृततत्त्वविवेकस्य व्याख्यानम् ।

---

**No. 119.** तत्त्वसंख्यानविवरणम् By जयतीर्थ. Substance, country-made paper, 9 × 2 inches. Folia, 13 Lines, 5 on a page. Extent, 325 çlokas. Character, Nāgara. Date ? Place of deposit, Tikāri, District Gayā, Pandit Çastri. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीवेदव्यासाय नमः ॥

लक्ष्मीपतेः पदाम्भोजयुगं नत्वा गुरोरपि ।
करिष्ये तत्त्वसंख्यानव्याख्यानं नातिविस्तरं ॥
मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वेनावगन्तव्य इति सकलशास्त्राणामविप्रतिपन्नोऽर्थः । इत्यादि ॥

**End.** सकलसत्त्वादेस्तदधीनत्वात्तदस्तु निमित्तमात्रमेव ।
स्वातन्त्र्येण तु विष्णुरेवास्येश्वर इति ॥
पद्मापद्मासनानन्तप्रष्टतीदं यदिच्छया ।
सत्यादि लभते देवः प्रीयतां श्रीपतिः स मे ॥

**Colophon.** इति श्रीमदानन्दतीर्थभगवत्पादविरचिततत्त्वसंख्यानविवरणं जयतीर्थभिक्षुकविरचितं समाप्तम् ॥

विषयः । आनन्दतीर्थकृततत्त्वसंख्यानस्य व्याख्यानम् ॥

---

**No. 120.** तत्त्वसुधानिधि By आनन्दतीर्थ. Substance, country-made paper, 11 × 5 inches. Folia, 9. Lines, 9 on a page. Extent, 300 çlokas. Character, Nāgara. Date ? Place of deposit, Hatuya, District Chāprā, Bābu Girindranāth Datta. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीहयग्रीवाय नमः ॥

अथापरोक्षज्ञानस्वरूपं निरूपयितुं तदुत्पत्तिं प्रथमतः कथयति ।
यद्देवैवं वैराग्यनिश्चयहढया भक्तिधुरया
परेदृक्षोपाया किल सपरिवारस्य भवति ॥
तदा नित्याव्यक्तोऽपि तु निजमहिम्नैव कमला-
निक्तोपेतः साक्षात् क्रियत इव सर्वैरपि हरिः ॥ इत्यादि ।

**End.** एवमपरोक्षज्ञानस्य मोक्षोपकारकत्वं सप्रपञ्चं निरूप्य मोक्षाख्यं फलं वदन्नुपसंहरति ॥

मोक्षाभिधं फलमुदैत्यपरोक्षभाजा-
मारब्धकर्मविगमे क्वचिदन्यथा न ।
एवं प्रसन्नहृदयः सहसा रमेशो
मोक्षादिकात्मविषये शमयत्वनर्थान् ॥

Colophon. इति श्रवणरोपाध्यायोपदर्शितदर्शनाखिलसरणिना सच्चिदानन्दतीर्थमतीषिणा रचितोचितार्थश्रेणिभाजि सुधानिधौ चरितविनरङ्गोयं सार्द्धं समुद्रं समेयिवान् । इति तत्त्वसुधानिधौ अपरोक्षज्ञानतरङ्गः ॥

विषयः । अपरोक्षज्ञानस्वरूपादिनिरूपणम् ॥

---

**No. 121.** तत्त्वकोषः. Substance, country-made paper, 8 x 5 inches. Folia, 4. Lines, 13 on a page. Extent, 53 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇdit Govinda Bhaṭṭa. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशं महेशानं भारतीमीश्वरं शिवं
नत्वा वक्ष्ये मातृकाया निघण्टुं बालबुद्धये ।
अध्रुवसारसिद्धयर्थं वेदादिस्तारकोऽव्ययः ।
प्रणवश्च त्रिमात्रोऽपि ॐकारो ज्योतिरादिषः ॥
अ. श्रीकण्ठः केशवश्चापि निवृत्तिश्च स्वरादिकः ।
अकारोमातृकादिश्च बाल इत्यभिधीयते ॥

**End.** संवर्त्तको वसिंहश्च हृदयात् सुखसंस्थितः ।
अनन्तः परमात्मा च वज्रकायोन्तिमः स्मृतः ॥

**Colophon.** इति तत्त्वकोषः समाप्तः ॥

विषयः । अकारादिवर्णानां यथायथमर्थकथनम् ॥

---

**No. 122.** तत्त्वमणिः By काशीश्वरः. Substance, country-made paper, 18 x 4 inches. Folia, 87. Lines, 6 on a page. Extent, 2,000 çlokas. Character, Bengali. Date ? Place of deposit, Bhāṇḍāipur, District Baguḍā, Paṇḍit Kālīçarana Cakravartti. Appearance, old. Prose and verse. Incorrect

Beginning. ॐ गुरवे नमः ॥

भक्तैर्नुतेन्द्रं नमश्च निवन्ते गणोकजटाजूटतटे निवेशम् ।
कन्दर्पकोटिद्युतिदेहकान्तिं कामारवंशीमिव चन्द्रलेखाम् ॥

\+ + + + +

तन्त्रमणिं नवम् गुह्यं वक्ति काशीश्वरः सुधीः ।

तत्र गुरुपदनाम निवन्तुते ॥

गकारात् ज्ञानसम्पत्ती रेफोऽपि सत् प्रकाशकः ।
उकाराच्छिवतादात्म्यं दद्यादिति गुरुः स्मृतः ॥ इत्यादि ।

End. वां वटुकाय नम इति मन्त्रेण वायव्ये बलिं दद्यात् ।
ॐ यां योगिनीभ्यो नम इति मन्त्रेण मध्ये बलिं दद्यात् ।
ॐ यां क्षेत्रपालाय नम इति अग्निकोणे बलिं दद्यात् ।

Colophon. इति बलिदानविधिः । इति तन्त्रमणौ महागोपनीये चतुर्थः पटलः ॥
अतःपरं खण्डितम् ॥

विषयः । १ पटले गुरुशिष्यलक्षणादिकथनम् ॥ कुलाकुलचक्रविचारः ॥ राशिचक्रादि-कथनम् । दीक्षामासादिनिरूपणम् ॥ मालासंस्कारादिकथनम् ॥ पुरश्चरणादिकथनम् ॥ दीक्षाप्रयोगादिकथनम् ॥ सकलमन्त्रगायत्रीकथनम् ॥ सामान्यपूजापद्धतिः ॥ २ पटले सकलमन्त्रबीजादिकथनम् ॥ ३ पटले तारापूजाप्रयोगादिकथनम् ॥ यन्त्रादिकथनम् ॥ ४ पटले मन्त्रसिद्धेरुपायादिकथनम् ॥ बलिदानविध्यादिकथनम् ॥

---

**No. 123.** तन्त्रराजः By काशीरामवाचस्पतिः. Substance, country-made paper, 15 × 3½ inches. Folia, 5. Lines, 7 on a page. Extent, 180 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur. Post Garvetā, Grām Khunverā, Late Paṇḍit S'ripati Bhaṭṭācārya. Appearance, fresh. Prose and verse. Correct.

Beginning. ॐ नमः सरस्वत्यै ॥

प्रणम्य सूक्ष्मां प्रकृतिं निर्गुणं पुरुषं तथा ।
श्रीकाशीरामसन्तुते तन्त्रराजं सतां मुदे ॥

तत्र गुरुलक्षणम् ॥

शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान् ।
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ इत्यादि ।

**End.** वस्तुतस्तु इदं प्रशंसापरं विचारस्य तु सर्व्वेषावश्यकत्वं श्रुतरहस्यत्वात् कदाचित् वैरिमन्त्रस्य स्वप्नादौ प्राप्तौ तत्तद्दोषस्य दृष्टत्वादिति तु साम्प्रदायिकाः ॥

**Colophon** इति श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचितः श्रीपरचितन्तन्त्रराजः समाप्तः ॥

विषयः । गुरुलक्षणकथनम् ॥ शिष्यलक्षणकथनम् ॥ दीक्षाप्रकरणविधिकथनम् ॥

---

**No. 124** तन्त्रसारपरिशिष्टम् By यतिवर. Substance, country-made paper, 17 x 3 inches, Folia, 83. Lines, 6 on a page. Extent, 2,000 çlokas, Character, Bengali. Date ? Place of deposit, Dinajapur, Rājārampur, Paṇḍit Çyāmāprasanna Vācaspati. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः शिवाय ॥

गुरुगणेशरविशक्तिशङ्करान्
हृदि विचिन्त्य जगज्जपादिहेतवे ।
तन्त्रसारपरिशिष्टसंज्ञकं
यतिवरेण गतिपरेण तन्यते ॥

अथ गुरुकथने वृद्धवर्म्मोत्तरावचम् ॥

तस्माद्गुरोर्व्वंशजातं वयोऽल्पमपि पण्डितं
गुरुं कुर्य्यात् तु दीक्षायामविचार्य्य गुरोः कुलं
ब्राह्मणो ब्राह्मणो चेत् कनिष्ठोऽपि गुरुर्भवेत् ॥ शाक्तस्य सर्व्वमन्त्रगुरुत्वञ्च ॥

तथैव रैवीवाक्यम् ।

वैष्णवानान्तु सर्व्वेषामहं दैवतमेव हि ।
तस्मात् ममोपासकः स्याद्विष्णुदीक्षाविधौ गुरुः ॥ इत्यादि ।

**End.** अथ घटार्गलयन्त्रम् ॥

पूर्व्वार्द्धे दक्षिणार्द्धे च रेखे कुर्य्यात् विचक्षणः ।
ईशानात् कोणपातञ्च रेखायुग्मं प्रकल्पयेत् ।
वह्नितो वायुकोणाग्रं रेखायुग्मं ततः क्रमात् ॥

अतःपरं खण्डितम् ॥

विषयः । वयोऽल्पगुरुकरणम् ॥ दीक्षाकालविचारः ॥ मन्त्रविचारादिकथनम् ॥ वाग्व्याप्तदर्शसंस्कारादिकथनम् ॥ आगमतत्त्वविलासोक्तदीक्षाविधिः ॥ मन्त्रचैतन्यादिकथनम् ॥ मन्त्रेन्द्रिय-

ध्यानकथनम् ॥ सप्ताहपुरश्चरणकथनम् ॥ पञ्चगव्यशुद्ध्यादिकथनम् ॥ कलौ होमनिषेधकथनम् ॥ सिद्धिमन्त्रप्रयोगादीनां पुरश्चरणकथनम् ॥ मित्रिताचारादिकथनम् ॥ गुरुध्यानकथनम् ॥ गायत्रीध्यानादिकथनम् ॥ तान्त्रिकसन्ध्याया नित्यत्वकथनम् ॥ पूजाविशेषकथनम् ॥ अन्तर्यागादिकथनम् ॥ मुद्राविशेषकथनम् ॥ तान्त्रिकलिङ्गपूजाकथनम् ॥ काम्यपूजादिकथनम् ॥ दीपान्वितापूजाव्यवस्थादिकथनम् ॥ रटन्तीपूजाव्यवस्थाकथनम् ॥ अजपामन्त्रप्रयोगादिकथनम् ॥ सीताराधादीनां मन्त्रकथनम् ॥ गुरुस्तोत्रकवचादिकथनम् ॥ मंत्रादुर्गाजयदुर्गादीनां स्तोत्रकथनम् ॥ ताराष्टकस्य व्याख्यानम् ॥ कवचादिकथनम् ॥

अतःपरं खण्डितम् ॥

---

**No. 125. तन्त्रसारसंग्रहः** By आनन्दतीर्थ. Substance, country-made paper, 12 × 4 inches. Folia, 31 Lines, 18 on a page. Extent, 620 çlokas. Character, Nāgara. Date ?, Place of deposit, Benares, Paṇḍit Vāmanācārya. Appearance, new Verse. Correct.

**Beginning.** श्रीवेदव्यासाय नमः ॥

जयत्यजभवेशेन्द्रवन्दितः कमलापतिः,

अनन्तविभवानन्दज्ञानशक्त्यादिसंगुणः ।

विधिं विधाय सर्गादौ येन प्रोक्तोऽस्त्रोत्तमः,

आवचे ( ... ) मोक्षविस्तसत्त्वादपन्नवः ॥

**End.** अशेषदोषोज्झितपूर्णसद्गुणं

सदा विशेषोपमतोयरूपम् ।

नमामि नारायणमप्रमेयः

सदाप्रियेभ्यः प्रियमादरेण ॥

**Colophon.** इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसंग्रहे चतुर्थोऽध्यायः समाप्तः ॥

विषयः । माध्वसम्प्रदायानां पूजादिविधिः ॥

---

**No. 126. तन्त्रसारसंग्रहटीका** By नरसिंहाचार्य. Substance, country-made paper, 12 × 6 inches. Folia, 48. Lines, 11 on a page. Extent, 1,056 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācārya. Appearance, new. Prose. Correct.

**Beginning.** पूज्यश्च भगवान् नित्यं इत्यत्र भगवत्पूजाकार्य्यत्युक्तं । ( ... ) आर्याश्च प्रतिमास्वप्रबुद्धानामित्युक्तेः, अन्येषां प्रतिमासापेक्षत्वात्, प्रतिमायाश्च, ऊर्द्ध्वदृष्टिं अधोदृष्टिं तिर्य्यग्दृष्टिं विपर्य्ययेत् ॥

**End.** संसारान्मोक्षदो भवति, तदनन्तरं कामदश्च, तस्मादधोदृष्टो भवेत्, यद्वा । मुक्तेः पूर्व्वमपि कामदश्च भवेदित्यर्थः ॥

**Colophon.** इति श्रीमदानन्दतीर्थविरचिते तन्त्रसारसंग्रहे श्रीमच्छलारिनरसिंहाचार्य्य-शिष्येण विरचिते तृतीयोऽध्यायः ॥

**विषयः ।** माध्वतन्त्रसारसंग्रहव्याख्या ॥

---

**No. 127. तर्कताण्डवम्.** Substance, country-made paper, 12 × 4½ inches. Folia, 318. Lines, 9 on a page. Extent, 5,724 çlokas. Character Nāgara. Date Sm. 1704. Place of deposit, Benares, Paṇḍit Vāmanā-cārya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ॥

अनन्तकल्याणगुणैकराशिमशेषदोषोज्झितमप्रमेयं,
मुमुक्षुभिः सेव्यमनन्तमोक्षदं भवच्छिदं तं प्रणमामि नित्यम् ।
श्रीमत्पदाम्बुजासक्तं करुणापुरमीनलं,
मध्याख्यो मदवंशो मे सन्तापान् हन्तु सन्ततम् ॥

**End.** नापि करणविघटनेन तथात्वे व्याप्तिपक्षधर्मतान्यतरविघटनस्यावश्यकत्वेना-व्याप्त्यसिद्ध्यन्यतरान्तर्भावो भविष्यति दुर्वारत्वात् । तदेतदभिप्रेत्योक्तं प्रमाण-लक्षणे असिद्धिरव्याप्तिरिति हेतुविरोध इति । सामान्येन परोक्तहेत्वाभास-नियमभङ्गः ॥

**Colophon.** समाप्तं तर्कताण्डवम् ॥ संवत् १७०४ ॥

**विषयः ।** वेदान्तदर्शनव्याख्या ॥

---

**No. 128. ताराप्रदीपः** By यादवाचार्य्यः. Substance, country-made paper, 15 × 2½ inches. Folia, 75. Lines, 5 on a page. Extent, 1,500 çlokas. Character, Bengali. Date ? Place of deposit, Bhāṇḍārpur, District Bagudā, Paṇḍit Kāliçarana Cakravartti. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ॥

पञ्चाशद्वर्णभेदा सकलगुणमयो नादबिन्दुप्रकाशो-,

व्यापी सत्ता विधाता परमगवतरो निष्कलो निर्विकारः ।

... ... ... ... ... ...

श्रीमत्पूर्णानन्दपरिव्राजकगुरोः पादाब्जसेवाश्रयात् ।

व्याचष्टे जनतोषणाय विधिना शास्त्रं प्रमोदप्रदं ॥

केचिच्छास्त्रागमतन्त्रमन्त्रनिपुणाः कौटिल्यमोहावृताः ।

तेषां वामविमार्गमोचनधिया ताराप्रदीपं शुभं ॥

तन्त्राणि सकलानि स्युः सात्त्विकादि त्रिधा यतः ।

तेषां विज्ञानसम्पत्त्यै ग्रन्थोऽयं सम्प्रदायतः ।

सात्त्विको राजसश्चैव तामसश्च तथापरः ।

त्रिविधः पूजको देव्याः स्वस्वभावानुसारतः ॥

**End.** नाद्यावसानां चलु पञ्चमत्रापञ्चपञ्चाम्तरतां ।

ध्यायेदेतन्त्यरूपामभिमतसुफलप्राप्तये शक्तिमाद्यां ॥

**Colophon.** इति श्रीमाद्याचार्य्यविरचिते तारामदीपे ... ... ... षष्ठः पटलः ॥

विषयः । १ पटले तारामन्त्रादिकथनम् । २ पटले पूजासङ्केतादिकथनम् । ३ पटले मारणोच्चाटनादिमन्त्रसङ्केतकथनम् । ४ पटले साधनसङ्केतकथनम् । ५ पटले नानामन्त्रादि-कथनम् । ६ पटले चन्तर्यागबहिर्यागादिकथनम् ।

---

**No. 129.** तारिणीतारकब्रह्मकूटाष्टोत्तरशतसहस्रनामस्तोत्रराजः (कवचन्यास सहितः) नीलतन्त्रे, उत्तरखण्डीयः. Substance, country-made paper, 12×3 inches. Folia, 13 Lines, 7 on a page. Extent, 325 çlokas. Character, Bengali. Date ? Place of deposit, Upalatāgrām, Post Meher, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgiśa. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ मेरुपृष्ठसुखासीनं शङ्करं चन्द्रशेखरम् ।

पप्रच्छ प्राञ्जलिर्भूत्वा पार्व्वती परमेश्वरं ॥

श्रीपार्व्वत्युवाच ॥

त्रैलोक्यनाथ श्रीनाथ जगन्नाथ जगद्गुरो ।

कृपया परयाविष्ट कथयस्व मयि प्रभो ॥

तकारकूटविद्यायास्तारायाः परमं शुभम् ।

सहस्रनाममन्त्रमहोत्तरसमाकुलम् ।
ताराभक्तजनमयं तारकं मोक्षतारकम् ।
मन्त्रविद्यामयं साक्षात् कल्पवृक्षलतामयम् ॥
सर्व्वमन्त्रतन्त्रसारं सारात्सारं परात्परम् ।
सुखात् सुखकरं सारं तारिणीमन्त्रराजकम् ॥
देवि सिद्धिविद्या सिद्धिमयं सर्व्वसाम्राज्यदायकम् ।
वद त्वं कृपया नाथ यदि स्नेहोऽस्ति मां प्रति ॥ इत्यादि ।

End. सर्व्वेषामुदयं जयं जयकरं मोक्षैकबीजाक्षरं
सारात्सारतरं परं सुविमलं कैवल्यधामाकरम् ।
यः स्तौति प्रयतः शुचिः प्रतिदिनं प्रातर्निशि श्रीपदं
स स्यादात्मसमाधिगो विभुरिव श्रीमच्छिवे संभवेत् ॥
तारिण्याः कृष्णनाम्ना विरचितमखिलं कोटिकोटिप्रकाशा
सर्व्वैर्य्यां पाठकाले कृतपरिरचितां सिद्धिमाप्नोति धीरः ।
प्रत्यक्षं प्राप्नुवन्तौ सकलरिपुगणान् तारकं पाककर्म्मौ
मुद्राणां दिव्यमालाविकसितहृदया ध्यायते कोमलपद्मे ॥
सत्याद्याम्भोजयुग्मोज्ज्वलपविविगलत्प्रेमधारा विशाला
पापौघप्रध्वंसमहोऽसठपठपथिराज्ञाद्विपिनप्रकाशा ।
मायाबीजस्वबीजप्रभवषड्गणास्यैकवर्णं विभर्त्ति
त्वं श्रीदेवेन्द्रराज्यं कुरु कुरु सततं मोक्षसम्पत्प्रदात्री ॥

Colophon. इति श्रीश्रीतन्त्रे उत्तरखण्डे सिद्धिविद्याप्रकाशे श्रीकृष्णमुखपङ्कजनिर्गत-तारिणीतारकमन्त्रकूटाष्टोत्तरशतसहस्रनामस्तोत्रराजकवचन्यासो नाम चतुस्त्रिंशः पटलः ॥ ॐ श्रीतारा ॥

विषयः । तारायास्तारकाष्टोत्तरशतसहस्रनामकथनम् ॥

---

**No. 130.** तिथिवादार्थ. Substance, country-made paper, 15 x 3¼ inches. Folia, 24. Lines, 10 on a page. Extent, 1,200 Çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā Bhaṭṭagrām, Paṇḍit Rāmhridaya Bhaṭṭācāryya. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्राचीनमते विद्वद्विध्वंसद्वारा प्रारिप्सितपरिसमाप्तिं प्रति मङ्गलस्य हेतुत्वे

निर्विघ्नप्रचयसमाप्त्यादेर्मङ्गलाचरणे विघ्नाभावेन ध्वंसाभावात् विघ्नाभावद्वारा प्रारिप्सितपरिसमाप्तिं प्रति मङ्गलस्य हेतुत्वं वाच्यं, तच निर्विघ्नप्रचये समाप्तौ विघ्नात्यन्ताभावः तस्य व्यापारस्वीकारस्तु नैमित्तिकत्वस्वीकारेण सविघ्न-प्रचये विघ्नध्वंसद्वारा इत्यभायमनुभयपरं प्राचीनमते । नव्यमते विघ्नध्वंसं प्रति मङ्गलस्य हेतुत्वं तच सविघ्नप्रचये विघ्नध्वंसः निर्विघ्नप्रचय स्थले मङ्गलाचरणस्वरूपप्रकारत्वस्यापि ध्वंसस्य कारणविघ्नरूपप्रतियोगिनो-ऽभावात् न विघ्नध्वंसः ॥ इत्यादि ।

**End.**

समार्कपातश्रवणैर्युता चेत् पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥

इति स्मार्त्ताः । गौरपौषस्यामावस्यायां अवतायां असम्भवात् चान्द्रपौषस्य मघः ननु यदि अमान्तमाघस्यामावस्यायां अवतायः कथं सम्भवः । उ । यदा चान्द्रमाघस्य चतुर्थदिवसे चतुर्दश्यात्मिका अथवा तदनन्तरं धनिष्ठा समुदायदिनव्यापिनी चामावास्या तदा रवेरेकराशिवस्थानं तुचठमिति सुधीभिर्भाव्यं । द्विवेव योगः सम्भोऽयं न तु रात्रौ कदाचन इति स्मार्त्ताः अयं योगः दिवैव रात्रौ कदाचन न इत्यन्वयः अयं योगः दिवैव यस्त इत्यर्थ × × × रात्रावपि अप्रसक्त योगः स्यात् तदानीन्तु अप्रसक्त-मपि न भवतीति भावः ॥ ( अतःपरं नास्ति ) ।

**Colophon.**

विषयः । त्रिविधश्रौतस्मार्त्तदानवीनां प्रमाणनिर्णयः ॥

---

**No. 131.** तिथ्यर्कप्रकाशः By दिवाकर. Substance, country-made paper, 8 × 4½ inches. Folia 111. Lines, 10 on a page. Extent, 2,800 çlokas. Character, Nāgara. Date ? Place of deposit, Tikāri, District Gayā, Paṇḍit Sāstri. Appearance, tolerable. Prose and Verse. Correct.

**Beginning.**

श्रीगणेशाय नमः ॥

जानकीनयनपुण्यगोचरं मानिनां नयनघोरगोचरं ।
श्रीरामेचचिरच्छविं सदा भावये मनसि राघवं मुदा ॥

... ... ... ... ... ... ...

श्रीरामेश्वरसूरिसूनुरभवन्नारायणाख्यो महान्
येनाकार्य्यविजृम्भणे सुविदिभावनिवेशनस्यार्णवम् ।

तत्पुत्रोऽविबुधाधिपः क्षितितले श्रीशङ्करस्तत्सुतो
जातोऽभाद्विनयेऽनुजः पृथुयशाः श्रीनीलकण्ठो बुधः ॥
भारद्वाजकुलेऽमले समभवत् श्रीरामकृष्णाभिधः
साहित्याम्बुतवारिराशिरपरः सर्वस्य जातः प्रभुः ।
तत् सूनुः प्रथमोऽपरो मणिरिव श्रीमान्महादेव इत्या-
ख्यो देवपुरोहितामलमतिर्न्यायाब्धिपारङ्गतः ॥
तत्पुत्रेण दिवाकरेण विदुषा श्रीनीलकण्ठप्रभो-
र्दौहित्रेण बुधैः सुधारसं समास्वाद्यः परेषां कृते ।
तिथ्यर्कः क्रियते प्रणम्य पितरं वाक्यं तथा मातरं
श्रीकाम्बं तपनं श्रियं पशुपतिं वाचं महादेवताम् ॥
अथ विध्युक्तकर्म्मानुष्ठानपक्षप्रकाशार्थं तदङ्गत्वेन षोडशतिथीनां. निर्णयः
क्रियतेऽथ्यते । अत्यन्ताप्राप्तप्रापणं हि विधिः । इत्यादि ।

End. कृत्यचिन्तामणौ प्राप्ते ।
नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमं ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेदिति ।
पौर्णमासी गुरुवारेण चिन्ता । मन्देन विपत्ता । योगिन्यत्र वायव्यामिति
पौर्णमासीनिर्णयः ।

Colophon. इति श्रीमद्द्विजशिरोमणिभारद्वाजमहादेवभट्टात्मजसकलविद्यानिधानदिवा-
करविरचिते तिथ्यर्कप्रकाशे षोडशतिथीनां निर्णयः समाप्तः ॥

विषयः । प्रतिपदादिषोडशतिथिकृत्यादिनिरूपणम् ॥

---

**No. 132.** तिथ्यर्कप्रकाशानुक्रमणिका By वैद्यनाथ. Substance, country-made paper, 8 × 4½ inches. Folia, 27. Lines, 10 on a page. Extent, 650 çlokas. Character, Nāgara. Date Sm. 1856. Place of deposit, Tikāri, District Gayā, Paṇḍit Çāstri. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** अथेष्टिकाल निर्णयः ।
नेमेष्टिः पर्व्वप्रतिपत्सन्धौ कार्य्या ॥ इत्यादि ।

**End.** सामान्यो व्रतधर्मश्च विशिष्टविधिनोदितं ।
श्रौतेषु विशेषस्तु नभिन्नादि निषेधनम् ॥

यष्ट्या प्रतिनिधीमांशु होरास्थाने समस्य चि ।
नैमित्तिकैः पुण्यकाल इत्येवं कथितः क्रमः ॥
इत्थं दिवाकरसुतेन कनीयसा श्रीरामानुजेन गुरुभक्तिपरायणेन ।
श्रीतातपादरचिते सुजनप्रिये ऽस्मिन् ग्रन्थे क्रमोल्लिखित एवसुर प्रसादात् ॥

**Colophon.** इति दिवाकरसूरिसूनु-वैद्यनाथकृता तिथ्यर्कप्रकाशानुक्रमणिका समाप्ता ॥ * ॥
संवत् १८५९ ॥ श्रीः ॥ । ॥

विषयः । दृष्ट्यादिकालनिरूपणम् । तथा तिथ्यर्कप्रकाशस्थकृत्यानुष्ठानकथनम् ॥

---

**No. 133.** हंसभास्करः. Substance, country-made paper. 14 × 5 inches. Folia, 10. Lines, 14 on a page. Extent, 350 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, fresh. Prose and verse. Correct.

**Beginning.** अथ धारणमात्रेण रोगनाशन फलकयन्त्रप्रकारः कथ्यते स चोक्तो यन्त्रसारे-
प्रणवं साध्यसमेतं विलिख्य षट्कोणकर्णिकामध्ये ॐ ह्रीं हंसः सोऽहं षड्वर्णान्
चालिखेच्च कोणेषु, केसरविलसत्तोरचतुर्वर्णं दलचतुष्टये चापि । इत्यादि ।

**End.** इत्यादिकन्तु न्यायविद्भिरूहितुं शक्यमेवेत्यलं विस्तरेणेति सर्वं शिवं । ...
... चापचाथविकमासि कौलके
वत्सरे धवलपक्षपञ्चमी ।
भास्करेण हंस भास्करः कृतो
भास्करावधि स जीवतु चिरौ ॥

**Colophon.** इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणसर्वतन्त्रस्वतन्त्रश्रीमद्गम्भीरराज-
भारतीदीक्षितात्मजभास्कररायोन्नीतहंसभास्करः सम्पूर्णतामगमत् ।

विषयः । अथ धारणमात्रेण रोगनाशनफलकयन्त्रप्रकारः । अथ पूजाप्रयोगमतिस्पष्टार्थं-प्रकारः । अथ ध्यानं । अथ न्यासः । अथ षोडशाक्षरयन्त्रं । अथ सकलयन्त्रोपयोगी यन्त्र-सामान्य-विधिः । अथ पीठप्रमाणं । अथ वीजाक्षराणि । यन्त्राष्टविंशतिकं ।

---

**No. 134.** तैत्तिरीय उत्सर्गोपाकरणम्. Substance, country-made paper, 10 × 5 inches. Folia, 7. Lines, 12 on a page. Extent, 1,262 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

सुमुखश्च इत्यादि देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं उत्सर्जनपूर्वं
( ...... ) श्रावणोपाकर्माङ्गभूतं ऋषितर्पणं करिष्ये ।
अग्रतश्चक्रमास्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे,
शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ।

**End.** तथोपाकरणे उत्सर्जनं करिष्ये । आज्यादिहोमान्तं कृत्वा तथैव स्वाध्यायं विसर्जयेत् । उत्सृष्टाः वै वेदाः । ततो भवति ।

**Colophon.** इत्युत्सर्जनं । इति तैत्तिरीयाणां उत्सर्जनोपाकरणम् ।

विषयः । तैत्तिरीयशाखीयानां यज्ञोपवीतधारणविधिः ।

---

**No. 135.** तैत्तिरीयसंहिता-होमपद्धतिः. Substance, country-made paper, 12 x 5 inches. Folia, 37. Lines, 10 on a page. Extent, 740 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, new. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

ओम् । नवानां त्वा नव, पादमप्स्वाहा । इमेलोके, पार्थि स्वाहा । १ ।
यज्ञस्य, गमनमसि स्वाहा । २ । प्रथमं, रक्षस्व स्वाहा । ४ ।

**End.** प्रत्याहुतिकर्यं दशांशेन यथाशक्ति ब्राह्मणान् भोजयेत्, पयसान्न सुतं पूपोदनव्यञ्जनादि औपचारिकमिति ज्ञातव्यम् । इति ।

**Colophon.** — — — — — — ।

विषयः । तैत्तिरीयशाखोक्तमन्त्रेण होमविधानम् ।

---

**No. 136.** त्रिसूत्रीनिबन्धव्याख्या By शङ्करमिश्र. Substance, country-made paper, 13 x 2 inches. Folia, 123. Lines, 5 on a page. Extent, 2,500 çlokas. Character, Bengali. Date ? Place of deposit, **Dinajpur,** Babu Giriś Candra Cakravartti. Appearance, very old. Prose. **In**correct.

**Beginning.** ॐ नमो नारायणाय ॥

पितुर्माज्ञां कृत्वा नमसि भवनाथस्य कृतिन-
चतुर्भ्योपन्यासमिव विलोक्य कथितः ।

मद्देतस्मिन् कर्मण्युतिगुरवि गौरीपरिवृडे
दृढा भक्तिः सैकिं जनयतु यथा स्यामवहितः ॥
प्रकाशदर्पणोद्यत्‌क्षद्धिर्याख्या कृतोज्ज्वला ।
तथापि योजनामात्रमुद्दिश्याचं ममोद्यमः ॥
मातरिति एष टीकां व्याचिकीर्षुरवं वे पुरस्तात् पुनःपुनस्त्वां मत्वा किमपि विज्ञापयामि निवेदयामि मद्वेद्वि जानीयि किं विज्ञापयामि इति विज्ञाप्यमाह समवाक्ये वाङ्मनसयोस्तथा चारमानय यथा एते वाचस्पते-र्वचसि न स्खलतो न प्रमाद्यत इति मत्वाराधना गौरविप्रीतिहेतुक्रिया विश्वपदार्थस्य न लीश्वरस्य सा सम्भवतीत्यत आह विश्वेति ॥ इत्यादि ।

**End.** ननु सन्देहो यदि विषयगतो विवक्षितस्तदा वक्ष्यं प्रतीत्यादि-टीकाविरोध इति विषये संशयमपास्य प्रामाण्ये शब्दानुमानयोः संशयमुपपादयति उपदेश इति वक्तावपीति प्रामाण्यसंशयस्य विषयसंशयोत्पादकत्वादित्यन्यत् । नन्विति तत्त्वज्ञानमेव न संप्रति व्यवस्थापनस्य फलमत आह एकदेशेति नन्वेतदेव कुत इत्यत आह प्रत्यक्षफलेति अनुमानादित्विति अनुमानं लिङ्गोपहितं शाब्दः शब्दोपहितः प्रत्यक्षेतु नोपधायकं किञ्चित् किन्तु साक्षादेव विषयमिन्द्रियसन्निकृष्टमित्यतस्तद्भावादिति आकाङ्क्षानिष्टम-र्भावादित्य ... ... ... ∴ ... विशेषणमाह द्वितीयेति ।

**Colophon.** इति महामहोपाध्याय-सन्मिश्रभवनाथात्मज-मिश्रश्रीशङ्करकृतन्यायसूत्री-निबन्धव्याकारः समाप्तः ।
पितायद्गुरुनाथेन व्याख्यातं मदिहालिखं ।
व्याख्यान गुणदोषाभ्यां सम्बन्धो मत्पितुर्न मे ॥

विषयः । गौतमसूत्रीयनिबन्धीभाष्यस्य व्याख्यानम् ॥

---

**No. 137.** त्वरितरुद्रविधिः . Substance, country-made paper, 12×5 inches. Folia, 4. Lines, 10 on a page. Extent, 60 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, old. Prose. Correct.

**Beginning.** अथ त्वरितरुद्रविधिः । तत्र स्नानः *विद्याप्राप्तिः । नाशः, आयुः । लाभः, अर्थः । सञ्चयः, शुभः । लाभः, मोक्षः यज्ञः । येनादिक्रमेण तिथिषु

द्वितीया-पञ्चमी-सप्तमी-त्रयोदशी-पञ्चदशी-प्रशस्ताः। नक्षत्रेषु अश्विनी-रोहिणी-मृगार्द्रा-पुष्य-मित्रोत्तरा-हस्त-चित्रा-स्वात्यनुराधा-विशाखा-श्रवणा-धनिष्ठा-रेवत्यः प्रशस्ताः। अथ प्रयोगः देशकालौ संकीर्त्य अमुकनामा अमुककामनासिद्ध्यर्थं अमुकसङ्ख्यकत्वरितरुद्रजपमहं करिष्ये।

End. होमोऽशक्तावभुक्तिश्च पुरश्चरणमुत्तमं।
यदि होमेऽप्यशक्तः स्यात् पूजायां तर्पणेऽपि वा॥
जपेद्दशांशहोमस्य तद्दशांशेन तर्पणं।
मार्जनं तद्दशांशेन तद्दशांशेन भोजनम्॥

Colophon. इति त्वरितरुद्रविधिः।

विषयः। त्वरितरुद्रपूजादिविधानम्।

---

No. 138. त्वरितरुद्रविधिः. Substance, country-made paper, 8 × 3 inches. Folia, 1. Lines, 16 on a page. Extent, 40 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācārryya. Appearance, old. Prose. Correct.

Beginning श्रीगणेशाय नमः।
अथ त्वरितरुद्रमन्त्रस्यागस्त्य ऋषिस्त्वरितरुद्रदेवतानुष्टुप् छन्दः नमः इति बीजं अस्त्विति शक्तिः, क्षिप्रं कार्य्यसिद्ध्यर्थे विनियोगः।

End. इष्टिकामो जपेन्मन्त्रं तिलैर्होमो घृतेन च।
वह्निपूजा तु कर्त्तव्या शिवस्य वरुणस्य च॥

Colophon. इति त्वरितरुद्रविधिः समाप्तः।

विषयः। त्वरितरुद्रपूजादिविधानम्।

---

No. 139. दत्तकविधिः By वाचस्पतिमिश्रः. Substance, country-made paper, 17 × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 195 çlokas. Character, Bengali. Date S.K. 1778. Place of deposit, Dinajpur, Paṇḍit Kṛṣṇa-dāsa Smṛtibhūṣaṇa. Appearance, fresh. Prose. Correct.

Beginning. ॐ नमो गणेशाय।
प्रणम्य शम्भुं शर्व्वाणीं लक्ष्मीशं जगतां पतिं।
श्रीवाचस्पतिमिश्रेण दत्तके विधिरुच्यते॥

**End.** अमुकगोत्रायामुकदेवशर्मणे तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात् ॥

**Colophon.** इति महामहोपाध्याय-वाचस्पतिमिश्ररचितं दत्तकपुत्रेष्टिप्रयोगविधिप्रकरणं समाप्तं ॥ शकाब्दा १७७८ ।

विषयः । दत्तकग्रहणविधिप्रयोगादि-कथनम् ॥

---

No. 140. दशप्रत्याख्यानविचारः. Substance, country-made paper, 10 x 4 inches. Folia, 2. Lines, 13 on a page. Extent, 60 çlokas. Character, Nāgara. Date Sm. 1904. Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, new. Prose. Correct.

**Beginning.** अथ दशपच्चखाण का विचार लिखे है ।

तिहां प्रथम अरिहंतनमसंभारी,
मोहणतरे पच्चखाणकरे ।
उग्गए सूरेनमोक्कार सहिय
यं मुष्टसी पच्चखामि ।
चउव्विहंपि आहारं ।
असनं, पानं, खाइमं साइमं ।

**End.** आगार• वापय, तथा अभिग्रह पच्चखाणकेविधिपिणं ए छि । आगार वायणा, पांचमो वोल्वय ए ( ... ) गारेणं, मो साधुके चोयं ।

**Colophon.** इति पच्चखाणविचारः । संवत् १९०४ ।

विषयः । जैनमते दशविधप्रत्याख्यानव्याख्यानम् ।

---

No. 141. दाशरथसप्तकम्. Substance, country-made paper, 8 x 3 inches. Folia, 6. Lines, 5 on a page. Extent, 50 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, old. Verse. Correct.

**Beginning.** ओम् कोपोद्रेकातितिर्य्यक् निखिलपरिचरन्नारचारप्रभूत-
ज्वालामालाप्रदग्धस्मरतनुशकलं लालयं सानुवेशं,
याचे त्वत्पादपद्मप्रणिहितमनसं द्वेष्टि मां यः क्रियाभि-
स्तस्य प्राणप्रयाणं परशिव ! भवतः शूलभिन्नस्य तूर्णं ।

End. इति गुह्यं महावीर्यं परमं रिपुनाशनम् ।
भानुवारे समारभ्य मङ्गलान्ते जपेत् सुधीः ।
यत्कृतं मम कृतं, यदकृतं कृत्यवन्मदाचरितं ।
उभयोः प्रायश्चित्तं शिव तव नामाक्षरद्वयोच्चरितं ॥

Colophon. इत्याकाशभैरवतन्त्रे उमामहेश्वरसंवादे द्वादशपटलकं सम्पूर्णं ।

विषयः । शिवमहिमवर्णनम् ।

---

No. 142. दिव्यानुष्ठानपद्धतिः. Substance, country-made paper, 8×3 inches. Folia, 14. Lines, 10 on a page. Extent, 300 çlokas. Character, Nágara. Date Sm. 1787. Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. श्रीगणेशाय नमः ।
अथ तुलादिव्यविधिः ।
तच्च सावष्टम्भाभियोग एव, न तु शङ्किताभियोगे,
नापि क्षपणसहस्त्रन्यूनद्रव्यविवादे च न भवति ।

End. अयं च दिव्यविशेषप्रयुक्तो क्रमः ।
निर्ऋते भविनोदायाहनं रात्रे च तत्परम् ॥
इत्यादिविशेषप्रयुक्तदण्डेन समुच्चीयते इत्यादि ग्रंथम् ।

Colophon. भट्ट रामेश्वरसुतो भट्टोनारायणः सुधीः ।
अनुष्ठानसुखार्थमां कृतवान् दिव्यपद्धतिम् ॥
इति श्रीविद्वन्मुकुटमाणिक्य-श्रीरामेश्वरभट्टात्मज-नारायणभट्टकृता दिव्यानुष्ठानपद्धतिः समाप्ता संवत् १७८७ ।

विषयः शपथविधि-कथनम् ।

---

No. 143. दुर्गोत्सवविवेकः By श्रीनाथाचार्य्यचूड़ामणिः. Substance, country-made paper, 13×2 inches. Folia, 12. Lines, 5 on a page. Extent, 240 çlokas. Character, Bengali. Date ? Place of deposit, Dinājapur, Rājārāmapur, Paṇḍit Çyāmāprāsanna Vidyāvācaspati. Appearance, tolerable. Prose and verse. Correct.

Beginning. अथ कालविवेकोक्तदुर्गोत्सवविधिः ।
चान्द्रमासे ऽश्वयुजि साश्विनं पूर्व्वं ।

आरोपार्चननिर्गमनमदस्याशोच्यतामधुना ।
तथ भगवतीपुराणम् ।
कन्यायां कृष्णपक्षे च नवम्यामार्द्रभे दिवा ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः ॥ इत्यादि ।

End. तथा तत्रैव नवम्यां पूजां कृत्वा गीतवादित्रैर्जागरणमुक्तं फलमुक्तं ।
सर्व्वपापविनिर्म्मुक्तो दिव्यतेजोमयस्तथा ।
मोदते दुर्गया सार्द्धं दुर्गा-लोके महीयते ॥

Colophon. इति महामहोपाध्याय-श्रीकरात्मज-श्रीश्रीनाथाचार्य्यचूडामणिकृत-दुर्गोत्सव-विवेकः समाप्तः ॥

विषयः । दुर्गोत्सवविध्यादि-कथनम् ।

---

**No. 144.** दैवतब्राह्मणभाष्यम्. Substance, country-made paper, 15 × 5 inches. Folia, 5. Lines, 11 on a page. Extent, 220 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, new. Prose. Correct.

Beginning. वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥
तत्कटाक्षेण तद्रूपं दधत्बुक्कमहीपतिः ।
आदिशत्सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणानाञ्च व्याख्यानं संप्रवर्त्तते ॥

End. अग्न्यादिदेवताकगीत्रयाणामपि छन्दसामेतद्दैवतम् । एता अग्न्यादि-देवता भवितुं युक्ताः इत्यर्थः ।

Colophon. इति श्रीदैवताख्ये पञ्चमे ब्राह्मणे द्वितीयः खण्डः ।

विषयः । सामवेदान्तर्गतदैवतब्राह्मणव्याख्या ।

---

**No. 145.** देवीमाहात्म्यटीका ( श्लोकार्थदीपिका ) By केवल. Substance, country-made paper, 13×4 inches. Folia, 5. Lines, 9 on a page. Extent, 140 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garbetā, Grāma Bhaṭṭagrām, Paṇḍit Rāmahridaya Bhaṭṭācāryya. Appearance, tolerable. Verse. Correct.

**Beginning.**

श्रीश्रीहरिः शरणम् ॥
या चाम्बिका प्रतिघटे जननीकुलश्री
यां पद्मजीप्रभृतयः शिवसेविताङ्घ्रिः ।
यां जिष्णु-विष्णु-नलिनीभव-भक्ति-तुष्टा
सा मां पुनातु सततं त्रिदशैकमाता ॥
भगवति तव लीला मामनाथं प्रसन्नं
पश्यति यदि जगत्यां का त्वदन्या समाप्ति ।
अनुदिनमनुभक्तः कर्मपाशावकाश-
स्त्रिभुवनजयपत्नीं त्वामहं चिन्तयामि ॥
जीवो जीवं प्राह देहप्रभेदात् कस्त्वं विप्रो ब्रूहि तत्त्वं श्रुतेस्त्वम् ।
जीवोद्धारः कर्मसूत्रादनित्यात् तस्मै मिथ्या वाक्यं किं शृणोषि ॥
अथ किल नत्युपदेशात् करुणाकुलः श्रीकेवलः स्तौति ।
ब्रह्मेशविष्णुजननीं सृष्टिस्थित्यन्तकारिणीम् ।
स्वर्गापवर्गदां नित्यां भजे चिन्तानुरूपिणीम् ॥
पुण्यान्यनेकानि भवन्ति भूमौ तेषां प्रशस्ताः सुमनः सुभाष्याः ।
सा त्वं स्तुतीनां प्रवरासि चण्डी यस्याः सुपाठात् सकलार्थसिद्धिः ॥
श्रीदुर्गाचरणाम्भोजं स्मरतामङ्घ्रिसेविना ।
द्विजानामेव माहात्म्यप्रकाशः क्रियते मया ॥
मत्वा विनोदं सकलगुणवतामपि सन्तोषणीयं ?
श्रीगोपालं प्रणम्य प्रकटितरचनाशालिनं नौमि धीरं ।
ये चान्ये वा सुपुण्या द्विजकुलमुकुटास्तानहं दण्डपाते
युष्माकं पादरेणुः प्रचुरकरुणया रक्षणीयो रमायाम् ।
चण्डी गुप्तार्थभावार्थौ शब्दार्थश्चापि कुत्रचित् ।
प्रकाश्यते पूर्वटीकाकाराशाकारिणानिशम् ॥ इत्यादि ।

**End.**

इति मार्कण्डेयपुराणे इत्यादि पूर्णकस्य ।
सकलयोग्यमाहात्म्यात्पूर्वमासीद् वधादिकं ।

सावर्णिके ऽष्टममन्वन्तरे मतृप्रतिपादितम्
मार्कण्डेयपुराणेऽत्र सूर्य्येण सुकर्मुकः ।
व्यवस्थितं श्रीमताय व्यासेन अमरात्मकम् ॥
इत्यस्मिन् चण्डिकापाठे सर्व्वधर्म्मविवर्द्धके ।
संशयच्छेदकाः श्लोकाः भवन्तु गुणिनां मुदे ॥
यत्र श्रीकमलेश्वरी विजयते हृत्पादपद्माश्रये
वासो मे बकुलपुरं भगवती मातेव शम्भुप्रिया ।
एष श्रीयुतकेवलेन कृतिना श्रीविप्रपादाम्बुजं
नत्वालेखि सुदुष्कृतं कुरुत मे मन्दस्य धीराः शिवम् ॥
ब्राह्मणेभ्यो नमस्कृत्य चण्डिकायै नमोऽस्तु च ।
कुपुत्रकठिनारम्भः पित्रोर्दुःखाय चाभवत् ॥
सतां सुदेऽर्भकानाञ्च ज्ञानाय संशयच्छिदे ।
श्लोकार्थदीपिका व्याख्या समाप्ता ब्राह्मणाशिषा ॥
रसचित्रप्रशास्तमितेऽतिशुभे
शुभ भाद्रपदे सितपक्षयुते ।
हरिवासरतारकपुण्यतिथौ
विदमेति समाप्तमतं ×.× ॥ (?)

**Colophon.** इति श्रीदेवीमाहात्म्यप्रकाशे श्लोकार्थदीपिका समाप्ता ॥

विषयः । देवीमाहात्म्यीयापातती कठिनश्लोकानां व्याख्यानम् ।

---

**No. 146. देवीमाहात्म्यटीका ( सुबोधिनी ) By माधवशर्म्मा.** Substance, country-made paper, 13×3 inches. Folia, 7 Lines, 5 on a page. Extent, 170 çlokas. Character, Bengali Date Sk. 1531. Place of deposit, Dacca, Sonārgā Krisnapura. Pandit S'arat Candra Bhattācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ॥

प्राक् किल भगवान् बादरायणान्तेवासी जैमिनिर्महाभारतविषयेषु केषुचित् पदार्थेषु सन्दिहानो मार्कण्डेयमहर्षिमुपगम्याप्राक्षीत् अथ नायमस्माकं कथावसर इति सर्व्वार्थाभिज्ञान् विन्ध्यावस्थितवासान् चतुरः पक्षिणः पृच्छेति मुनिनोपदिष्टोऽसावपि तथाकार्षीदिति पुनर्जैमिनिप्रश्नानुरोधात्

मार्कण्डेयभागुरिसंवादात्मकमितिहासमनुवर्णयन्नाह पक्षिण ऊचुः मार्कण्डेय उवाचेति चतुर्भिः । इदानीं स मनोः कथानन्तरं कौष्टुकिं मुनिं सम्बोध्य कथां कथयति मार्कण्डेय उवाचेति । इत्यादि ।

End. एवं प्रकारेण सुरथः देव्या वरं लब्ध्वा सूर्य्यात्मज समासाद्य सावर्णिर्मनुर्भविता सवित्तर्षभः सवितृसुतः सावर्णिर्भवितामनुरिति पुनरावृत्तिः समाप्तिं द्योतयति तथा स्वायादिति चतुर्भुजेन लिखितमिति ॥

Colophon. षड्वेदाग्निबाणचन्द्रशाके ऽकारि सुबोधिनी ।
सुधियां हृदये स्थास्यति श्रीमन्माधवशर्मणा ॥

विषयः देवीमाहात्म्यव्याख्यानम् ।

---

**No. 147. द्वारकाखण्डम्.** Substance, country-made paper, 14×5 inches. Folia, 92. Lines, 9 on a page. Extent, 2,300 çlokas. Character, Bengali. Date ? Place of deposit, Dinājpur, Rājavāṭi. Appearance, fresh. Verse. Correct.

Beginning. श्रीगणेशाय नमः ॥
श्रीशौनक उवाच ।
कथं सूत युगे तस्मिन् रौद्रे वै कलिसंज्ञके ।
बहुपापण्डसङ्कीर्णे प्राप्स्यामो मधुसूदनम् ॥
युगत्रये व्यतिक्रान्ते धर्म्माचारपरैः सदा ।
प्राप्ते कलियुगे घोरे क्व विष्णुर्भगवानिति ॥ इत्यादि ।

End. कृत्वा पापसहस्राणि कलौ कोटिशतैरपि ।
मुच्यते सर्व्वपापेभ्यस्तद्विष्णोः पदमाप्नुयात् ॥
मद्दर्शनेन किं पुण्यं किंवा देवि मदर्चनात् ।
केवलं गोमतीं स्नात्वा कृष्णं दृष्ट्वा लभेन्नरः ॥

Colophon. इति श्रीस्कन्दपुराणे प्रह्लादसंहितायां द्वारकामाहात्म्ये षट्चत्वारिंशत्तमोऽध्यायः । समाप्तश्चायं ग्रन्थः ॥

विषयः । १ च ऋषिप्रश्न कथनम् । २ दुर्व्वासस आगमनकथनम् । ३ चक्रतीर्थदुःखमोचनादिकथनम् । ४ । ५ गोमतीचक्रतीर्थोत्पत्तिकथनम् । ६ । ७ द्वारकामाहात्म्यकथनम् । ८ समुद्रगोमतीमाहात्म्यकथनम् । ९ चक्रतीर्थमाहात्म्यकथनम् । १० विष्णुपादोदकमाहात्म्यम् । ११ । १२ मयसरोवरमाहात्म्यादिकथनम् । १३ । १४ नदीमाहात्म्यादिकथनम् ।

१५ सिद्धेश्वरमाहात्म्यम् । १६० तीर्थकथनम् । १७ । १८ देवयात्रादिपरिचारकथनम् । १९ । २० । २१ कृष्णपूजाप्रबोधविधिफलादिकथनम् । २२ वसिष्ठकृततीर्थदर्शनफलकथनम् । २३ । २४ । २५ । २६ गङ्गोद्धारमाहात्म्यादिकथनम् । २७ पिण्डारकधर्मप्रस्थतीर्थमाहात्म्य-कथनम् । २७ । २८ । २९ । ३० द्वादशीमाहात्म्यादिकथनम् । ३१ तीर्थक्षेत्रदर्शनफलादि-कथनम् । ३२ देवतीर्थयात्रादिकथनम् । ३३ द्वारकादर्शनफलकथनम् । ३४ । ३५ द्वारका-भिषेकादिकथनम् । ३६ चक्राङ्कपापहरादिकथनम् । ३७ । ३८ वसिष्ठमान्धातृप्रबोधादिकथनम् । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ द्वारकामाहात्म्यादि कथनम् ॥

---

**No. 148. द्वैतविवेकः.** Substance, country-made paper, 14×3 inches. Folia, 4. Lines, 7 on a page. Extent, 110 çlokas. Character, Bengali. Date ? Place of deposit, Upalatāgrām, Post Mehar, Zilla, Comilla, Paṇdit Jagadbandhu Tarkavāgīśa. Appearance fresh. Verse. Generally correct.

**Beginning.** ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ।
विवेके सति जीवेन हेयो बन्धः स्फुटीभवेत् ॥
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं ।
स मायी सृजतीत्याह श्वेताश्वतरशाखिनः ॥
आत्मा वा इदमग्रेऽभूत् स ऐक्षत सृजा इति ।
सङ्कल्पेनासृजल्लोकान् स एतानिति बह्वृचः ॥ इत्यादि ।

**End.** दृश्येनादर्शने चित्ता स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित् स्वयम् ॥
जीवन्मुक्तिः परा काष्ठा जीवद्वैतविवर्जनात् ।
लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥

**Colophon.** इति श्रीद्वैतविवेकः समाप्तः ।

विषयः । द्वैतमत-स्थापनम् ।

---

**No. 149. धूर्त्तभाष्य (११ श प्रश्न) आपस्तम्बगृह्यस्य.** Substance, country-made paper, $9 \times 4\frac{1}{2}$ inches. Folia, 27. Lines, 10 on a page. Extent, 1,540 çlokas. Character, Nagara. Date ? Place of deposit, Benares, Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. प्रवर्ग्यसंभरणं कुर्व्वन् अमावस्यायां पौर्णमास्यां आपूर्य्यमाणपक्षस्येति
कोऽपि तुल्यविकल्पानि पूर्व्वं प्रातरारभ्य प्रवृज्यते इति प्रवर्ग्यः ।

End. अर्थः नाप्रन्तमुत्पतितमिति यथा सुराणा अपि न वर्त्माणीति वरन्ति नदेवं
वयं वदेत्ता उपासम कृत्यथापलेनेत्यर्थः ।

Colophon. इति धूर्त्तस्वामिविरचिते आपस्तम्बभाष्ये एकादशप्रश्ने षष्ठः पटलः ।

विषयः । आपस्तम्बप्रवर्ग्यसूत्रभाष्यम् ।

---

No. 150. नन्दिकेश्वरस्तववृत्ति. Substance, country-made paper, 12 × 4½ inches. Folia, 25. Lines, 15 on a page. Extent, 1,500 çlokas. Character, Nagara. Date ? Place of deposit, Benares, Dikmaṇḍalācā yya. Appearance, fresh. Prose. Correct.

Beginning. वर्द्धयतु वर्द्धमानः श्रीचिन्ताममश्चिन्तायको वाचं ।
चित्तचमत्कृतिचतुरं चतुराणां ( ... ) यो यस्य ॥
अर्थगुगलं जिनवक्रभसूरीन्द्रकृते चरितपञ्चके ।
संक्षिप्तसुगमं किञ्चिद्व्याख्यानं वितनोम्यहम् ॥

End. इत्यत्र वन्दे इत्यस्य मङ्गलमिति गाथार्थः ।
साधुसोमगणीशेनाकृतेनार्थप्रबोधिनी ।
नन्दीश्वरस्तवे चक्रे हृत्तिश्चित्तप्रमोदिनी ॥

Colophon. ... ... ... ... ... ... ।

विषयः । नन्दिकेश्वरस्तवव्याख्या ।

---

No. 151. नलोदयकाव्यटीका ( यमकप्रकाशिका ). By वागीशः Substance, country-made paper, 17 x 4 inches. Folia, 52. Lines, 9 on a page. Extent, 2,000 çlokas. Character, Bengali. Date Sk. 1687. Place of deposit, Dinājpur, Paṇḍit Kṛṣṇadāsa Smṛtibhūsana. Appearance, old. Prose. Incorrect.

Beginning. ॐ नमोगणेशाय ।
नमो गणेशाय गुणातिगात्मने
जनेष्वनुक्रोशदृशा गुणस्पृशे ।
धर्मोदयोत्पत्य वनचयश्रिया
क्रियाशुचे नित्यसुखस्वरूपिणे ॥

अस्ति सर्व्वमिदं वेदे सभेदे नाकप्रपञ्चनं ।

अथासौ श्रीमान् कालिदासनामा कविः प्रारिप्सितकाव्यकरणे विघ्नध्वंसादिकमभिलषन् नारायणस्मरणरूपमङ्गलमादौ श्लोकचतुष्टयेन निबध्नाति हृदयेत्यादि । हे हृदय मानस यतो वासुदेवात् त्रिजगत् भुवनत्रयं त्वं ततो मा गाः नैव गच्छ वस्तुतः श्रीकृष्णं परित्यज्य कुत्रापि मा यासीति अभिप्रायः ॥

**End.** पुरोहितादिभिश्च बान्धवैः सर्व्वैः समं बुभुजेतरामिति ग्रन्थसमुदायार्थः ॥

**Colophon.** इति नलोदयटीकायां वागीशविरचितायां यमकप्रकाशिकायां चतुर्थोच्छ्वासविवरणं समाप्तं । समाप्तश्चायं ग्रन्थः ॥ ... ...

श्रीरामनाथ-नरनाथविराजितायां ।

यस्यावनौ जयति नौरिव काव्यसिन्धोः ॥

व्याख्येयमुल्लसितसर्व्वगुणानुरक्ता ।

वागीश चित ? विरचितास्मिन् मङ्गलाय ॥ श्रीकृष्णचन्द्रशर्म्मणः स्वाक्षरमिदं ॥ शकाब्दाः १६८१ ।

विषयः । कालिदासकृतनलोदयकाव्यस्य व्याख्यानम् ॥

---

**No. 152.** नलोदय टीका. By रामनारायण सिद्धान्त. Substance, country-made paper, $13\frac{1}{2} \times 3$ inches Folia, 34. Lines, 7 on a page Extent, 900 çlokas. Character, Bengali Date of writing Sk 1715. Date of composition Sk. 1635. Place of deposit, Zilla Midnapur, Post Garveta Gram, Khunverā, Late Paṇḍit Śripati Bhaṭṭācāryya. Appearance, fresh. Prose Correct.

**Beginning.** श्रीरामाय नमः ।

वामे भागे रणुरणुरवं नूपुरं रत्नकाञ्ची

सालङ्कारः कृत शश्भिः कौतुकाद् दक्षिणेन ।

भूतिर्भोग्याभरणमजिनं सुभ्रु किं वेत्ति चार्य्या

चातुर्य्यार्थं शशिशुभमुखं त्वामगद्दः शिवोऽव्यात् ॥

हृदय इत्यनेन श्लोकेन कविरिष्टदेवतां नमस्यति । हे हृदय यादवतः यदुकुलोद्भवात् पुरुषोत्तमात् प्रकाशात् सदा मा गाः किंविशिष्टात् दुरासदायाः पापाढ्या इवतः इवाग्नेः अरिसमुदयात् त्रिजगत् अवन । इत्यादौ सुतरामवावित्यभिधानं । इत्यादि ।

**End.** नलेन । अनायता ग्लानिरचितेन नलेन या प्रतिज्ञा सम्यक् सम्पत्तिः अपूरि पूरिता यथा पूर्वमासीत् तथा कृता इत्यर्थः सदा अयं नलः उन्नताः उद्गतं महस्तेजो यस्य स न महामहा महोत्सवा महान् उत्सवो यत्र तां सम्पदं अवाप्त त्यजनवान् ओकाक् त्यागे आत्मनेपदार्थे यत्नः करणीयः ।
नागरामर्तुचन्द्राब्दे निःसृता कूटबोधिनी ।
रामनारायणमुखात् सुखाय पठतामियं ॥

**Colophon.** समाप्तेयं नलोदयटिप्पणी ॥ शकाब्दाः १७१५ ।

विषयः । नलोदयस्य व्याख्यानम् । ग्रन्थकारविषये ऽस्ति संशयः यतः प्रथमे आदौ इत्यादित्यसुरविरचितायां नलोदयटीकायां प्रथमः । द्वितीये नास्ति पुष्पिका तृतीय-चतुर्थयोस्तु रामनारायणसिद्धान्तकृतकूटबोधिन्यां नलोदये तृतीयः — ० चतुर्थः ।

---

No. 153. नवलिङ्गसूत्रम् . Substance, country-made paper, $12 \times 4\frac{1}{3}$ inches. Folia, 6. Lines, 13 on a page. Extent, 1,503 çlokas. Character, Nāgara. Date Sm. 1203. Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, old. Prose. Correct.

**Beginning.** अर्हम् ॥
पुंलिङ्गं क ट ण थ प भ म य र ष स स्वन्तमिह न लौकिकत्व, न, नभो-
य औदः किभाति च कर्णरिच कः स्यात् ।

**End.** निःशेषनामलिङ्गानुशासनान्यभिसमीक्ष्य संक्षेपात् आचार्यहेमचन्द्रः समास्त तदनुशासनानि लिङ्गानां ।

**Colophon.** इति नवलिङ्गसूत्राणि समाप्तानि । संवत् १२०३ । पौषवदि त्रयोदशी ।

विषयः । लिङ्गविचारः ।

---

No. 154. नवलिङ्गानुशासनावचूरिम् . Substance, country-made paper, $12 \times 4\frac{1}{2}$ inches. Folia, 6 Lines, 17 on a page. Extent, 1,540 çlokas. Character, Nāgara. Date, Sm. 1503. Place of deposit, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, old. Prose. Correct.

**Beginning.** ० अर्हम् ॥
क, ट, ण, थ, प, भ, म, य, र, षम्, इत्येतदन्तं च पुंलिङ्गं स्यात्, कादयो-

ऽकारान्ता प्रत्यन्ते लिङ्गे पृथक् सन्निवेशात्, नामेति सर्व्वनामाव्ययमिति सम्बध्यते । कोन्तः अनेकः ।

End अत यदुक्तं लिङ्गस्वरूपं तद्दृष्टान्तं द्रष्टव्यं । तेन कठानां धर्मः आम्नायः काठकं कालापकं इत्यादि ।

Colophon. इति लिङ्गानुशासनावचूरि समाप्तम् ।

विषयः । नवलिङ्गानुशासनव्याख्या ।

---

No. 155. नाभेयस्तवावचूर्णिः . Substance, country-made paper, 12×4½ inches. Folia, 3. Lines, 21 on a page. Extent, 270 çlokas. Character, Nāgara. Date SM. 1659. Place of deposit, Benares. Dikmaṇḍalācāryya Mahārajā Bālacandra. Appearance, old. Prose. Correct.

Beginning. नमः श्रीसर्व्वज्ञाय ।

श्रीविजयतिलकमहोपाध्यायविहितस्यानेकविचारसार-श्रीमधुसूदनव्यासचारानुकार-श्रीऋषभदेवस्तोत्रस्याचराथो विधीयते पूर्ब्बं विमलाचलस्थामिनं नाभेयं नमस्कृत्य तस्यैव भगवतः पादपद्मरजः सेवाम्बुदानमित्यादि ।

End. जीवाधकचेण तस्य गच्छविजयतिलको यस्य सः पचे कविनाम निष्कलङ्कं इति ।

Colophon. इति नाभेयस्तवावचूर्णि समाप्तं । संवत् १६५८ ।

विषयः । जैनमते ऋषभदेवस्तवव्याख्या ।

---

No. 156. नित्यानुष्ठानम् . Substance, country-made paper, 15×5 inches. Folia, 11. Lines, 8 on a page. Extent, 270 çlokas. Character, Bengali. Date ? Place of deposit, District Medinipur Ayodhyā Raghunāthvāti, Post Chandrakonā, Babu Chakrapāṇi Ráya. Appearance, old. Verse. Generally correct.

Beginning. श्रीराधाकृष्णाभ्यां नमः ॥

एकदा यमुनातीरे सदासीनं जगद्गुरुं ।
नारदः प्रणिपत्याच देवदेवं सदाशिवम् ॥

श्रीनारद उवाच ।

देवदेव महादेव सर्व्वज्ञ जगदीश्वर ।
भगवद्धर्म्मतत्त्वज्ञ कृष्णमन्त्रविदां वर ॥
कृष्णमन्त्रा मया लब्धा त्वत्तो ये च पितुः पराः ।
ते सर्व्वे साधिता गोपालमन्त्रराजादयो मया ॥
बहुवर्षसहस्रैस्तु शाकमूलफलाशिना ।
शुष्कपर्णाम्बुवाय्वादिभोजिना च निरन्तरं ॥
स्त्रीणां सन्दर्शनालापवर्जिना भूमिशायिना ।
कामादिषड्गुणान् जित्वा बाह्येन्द्रियं नियम्य च ॥
अनन्यमनसा नित्यं कृष्णध्यानपरायणः ।
त्रिकालस्नाननियमः शौचाचारपरायणः ॥
एवमादिगुणैर्युक्तो बहुवर्षशतानि च ।
संसाध्य मन्त्रान् प्रत्येकं निर्वेदं गतवानहम् ॥
न पुरश्चरणैः कश्चिद् विनाष्टादशभिर्मनुः ।
केनापि साधितः क्वापि मया दृष्टो हि भूतले ॥
कलौ किन्तु भविष्यन्ति नराः पापपरायणाः ।
स्वल्पायुष्का मन्दभाग्या मन्दप्रज्ञाः कुमेधसः ॥
इत्थं चिन्ताकुलो देव त्वामहं शरणं गतः ।
तदुपायं कश्चिदद्य कलिकालोचितं वद ॥
येनाञ्जसा गमिष्यन्ति तव लोकं नराः प्रभो ।
भगवन् केन मन्त्रेण संसारोत्तारणं नृणाम् ॥
तन्ममाचक्ष्व यत्नेन सर्व्वलोकहिते रतः । इत्यादि ॥

End. इति ते सर्व्वमाख्यातं नैत्यिकं चरितं हरेः ।
पापिनोपि विमुच्यन्ते श्रवणाद् यस्य नारद ॥

श्रीनारद उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि त्वया देव न संशयः ।
हरेर्नैमित्तिकी लीला यतो मह्यं प्रकाशिता ॥
× × × × × × ।
× × × × × × ॥

Colophon. इति श्रीसनत्कुमारीयतन्त्रे श्रीसनत्कुमाराम्बरीषसम्वादे नित्यानुष्ठाने

श्रीकृष्णयुगलचन्द्रप्रकाशकः षड्विंशत्पटलः ॥

कः सन्दर्भविपुरभयिमा कस्य कर्षस्य चन्ता

नद्याः कूलं विघटयति कः कः प्रियः कामिनीनां ।

कः सन्नद्धो भवति समये भूषणं किं कुचानां

किं वा दुःखं भवति मनसां मानपूज्योपचारः ॥

विषयः । श्रीकृष्णस्य दैनन्दिनीलीलाकीर्त्तनमेव कलिकलुषनाशनमिति कथनम् ॥

---

**No. 157.** निरयावली सूत्रम् . Substance, country-made paper, 12×4½ inches. Folia, 43. Lines, 11 on a page. Extent, 1,075 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Dikmandalacāryya Mahārāja Bālacandra. Appearance, old. Prose. Correct.

**Beginning.** नमः श्रीवीतरागाय ॥

तेणं कालेणं तेणं समयेणं रायगिहे नामं नगरे होत्था । रिद्धत्थिमिय समिद्धे ए वन्न उ गुणसीलए चेइए वणसंडे पुढवि सिला पट्टये ।

**End.** निरया वलीया उवाशायं एगोसुयक्खंधपञ्चवग्गा, पञ्चसु दिवसेसु उद्दिस्सन्ति तत्थ चउसुवग्गे सुदस दस उद्देसगा पञ्चमवग्गोरायस उद्देसा । निरयावलीयासुयक्खन्धो सम्मत्तो ।

**Colophon.** निरयावलीसूत्रं समाप्तम् ।

विषयः । जैनधर्मोपदेशकथनम् ।

---

**No. 158.** निर्णयसिन्धुटीका ( रत्नमाला ) By कृष्णभट्ट . Substance, country-made paper, 8×4 inches. Folia, 334. Lines, 9 on a page. Extent, 8,500 çlokas. Character, Nāgara. Date ? Place of deposit, Tikāri, Dist. Gayā, Paṇḍit Çastri. Appearance, fresh, Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ॥

श्राद्धलक्षणं परिष्कुरुते श्राद्धमिति। एतच्च तर्पणवारणाय । तत्र विप्रस्वीकाराभावात् । न तु त्यागाभावात् । इन्द्र उर्जो अध्वर इत्यादिद्रव्य-

देवतासंयोगेन यागस्य तत्रापि कल्पनीयत्वात् । न समेत्यभिलापस्तु नास्ति चाचाराभावात् । यत्रैव यागाग्निहोत्रादौ तदाचारस्तत्रैव तन्मूलतया श्रुतिः कल्प्यते न सर्वत्र ॥ इत्यादि ।

End. नित्यकर्म्म सन्ध्यावन्दन गायत्रीजपादि । तथा—

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीं

पादुके चापि गृह्णीयाद्दैवं दण्डमत्रयं ।

माधुकरमयैकान्नं परहंसः समाचरेदिति ॥

इष्टेः प्राक् कर्तव्यतया श्राद्धादिकन्तु प्रतिजानीते चयेति एतच्च विशेषस्थादि निबन्धेष्वतिविस्तृतमिति तत एव न्यूनातिरिक्तं निर्णेतव्यमित्युपरम्यते ॥ * ॥

Colophon. इति कृष्णभट्टविरचिता रत्नमाला ॥ * ॥

विषयः । निर्णयसिन्धोर्व्याख्यानम् ॥

---

**No. 159.** नीतिमञ्जरी. Substance, country-made paper, 14 x 5 inches. Folia, 100. Lines, 9 on a page. Extent, 2,700 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Apperance, old. Prose. Correct.

Beginning. दिवाकरं प्रणम्यादौ मुकुन्दञ्च द्विवेदिनं,

वेदवेदाङ्गतत्त्वज्ञं स्मृतिज्ञं दीक्षितं प्रभुं ।

तस्य नप्ता सुता यस्या गुणधर्मोज्ज्वलबुद्धिमान्,

एकादशप्रकारैस्तु संहितापाठतत्परः ॥

वसंश्च श्रीमदानन्दे सुरभूसुरसेविते,

तेनेयं रचिता यस्मात् तन्नाम गुणदीपिका ।

विलोक्य संहितामध्य इतिहासान् पुरातनान् ।

लतवैधर्मसंयुक्ता श्लोकैर्बद्धा सुबुद्धिदा ॥

End. हे जनाः भिन्नबुद्धयः वो युष्माकं चाकूतिः सङ्कल्पो व्यवसायो वा समाना एकविधा चास्तु, तथा वो युष्माकं हृदयानि भिन्नबुद्धियुक्तानि समानासमानानि एकविधानि सन्तु । तथा वो युष्माकं मनोऽन्तः करणं तदपि समानमस्तु प्रत्येकावेवमथा एकवचनं, यथा वो युष्माकं सुसहः शोभनसाहित्यं चसति भवति तथा समानमस्त्विति ।

**Colophon.** इति नेमिनिर्वाणमहाकाव्यं समाप्तः ।

विषयः । See Rāj Metra, vol. x, p. 283, No 418.

---

**No. 160.** नेमिचरित्रम् By हेमचन्द्र आचार्य्य. Substance country-made paper, 12 × 5 inches. Folia, 108. Lines, 17 on a page. Extent, 4,320 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Dikmandalācāryya, Mahārāja Balacandra. Appearance old. Prose. Correct.

**Beginning.** ॐ नमो विश्वनाथाय जन्मतो ब्रह्मचारिणे ।
कर्म्मवल्ली वनच्छेदनेमये अरिष्टनेमये ॥
श्रीमन्नेमेरर्हतः कृष्णविष्णोरामस्य तच्छत्रोरिणः ।
जरासन्धं प्रतिवारेश्चरितं कीर्त्तयिष्यते ॥

**End.** द्वाविंशोर्हन्नय च नवमः शार्ङ्गभृत् सीरपाणि-
र्वदेरिश्चेत्यनवसमयत्र कीर्त्तिमा पर्व्वणीच ॥
चत्वारोपि प्रवचनदिशा सम्यगुद्दिश्य एषा ।
नेमी कोऽपि श्रुतिपथगते विश्वयोग त्रिलोक्यां ॥

**Colophon.** इत्याचार्य्य-हेमचन्द्रविरचिते त्रिषष्टि शलाकापुरुषचरिते महाकाव्ये अष्टपर्व्वणि बलदेवस्वर्गगमनं नाम नेमिनिर्वाणपाण्डवनिर्याणवर्णन नाम द्वादशः सर्गः ।

विषयः । नेमिनाथचरित्रवर्णनम् ।

---

**No. 161.** न्यायसुधा ( ब्रह्मसूत्रानुव्याख्यान टीका ) By जयतीर्थ. Substance, country-made paper, 8 × $4\frac{1}{2}$ inches. Folia 1,351. Lines, 9 on a page. Extent, 27,000 çlokas. Character, Nāgara. Date ? Place of deposit, Tikari, Dist. Gayā, Paṇḍita Çāstri. Appearance, tolerable. Prose. Incorrect.

**Beginning.** प्रथमपादस्य नास्ति तेन चतुर्थपादप्रारम्भवाक्यं लिखितं ॥
नहि धर्म्मादिसिद्धिः स्यात् तस्य प्रमाणान्तरागोचरत्वात् । नैवं चमृत्युरया-
दृष्टा धर्म्मादेरपि वेदादिवेद्यत्वादित्याशय इत्यादि ॥

**End.** यथा भगवत् स्वरूपविज्ञानं पुरुषार्थ्यसाधनं तथा स्वस्वरूपविज्ञानमपौरुषत-
स्तदाविष्कुर्य्यन्नाह । यस्येति । यस्य वायोर्देवस्य वेदवचने वक्तित्वादौ

अलं दिव्यानि अद्भुतानि त्रीणि रूपाणि उदितानि अमुना वायुना कीदृशं तस्य मूलरूपं कथं भूतानि च त्रीणि रूपाणि इत्यत उक्तं वरिष्ठेत्यादि । यस्य तन्मूलरूपं वडवानलात्मकं दर्शितज्ञानरूपं च इमोरीण् दिकात् उप्रत्ययः । अनेन वायुशब्दो वस्तुवाची अय् गत्यर्थः गत्यर्थाश्चावगत्यर्थाः । तत उभयत्रापि गृह्णेति वायुरिति । किञ्च भर्गो भरणगमनयोः इत् । डुकृञ् करणे गम्लृगतौ आभ्यां असुन् प्रत्ययारिच । इदमपि वायुशब्दव्याख्यानं वा गतिगन्धनयोरित्यतः कृवापादिति स्वान्दिसाध्यसूभ्यतन् इति तन् । अनेकार्थत्वाद्धातूनां वातिर्भरणे वर्त्तते । अपि च महत् श्रेष्ठं वयः + + + इत्यस्मादुन् ॥ न केवलं मूलरूपमेव किन्तु यस्यावतारेषु निचितं रूपं + + + प्रथमकं प्रथमं रूपं रामविषयाणि वचांसि मूलरामायणादीनि रामवचांसि तेषां नयं नीयते शिष्येषु प्रवर्त्यन्ते अनेनेति । एरजित्यच् । यस्य द्वितीयं वपुः भ्रूणः भ्रूशब्द भ्रूणनामवाची प्रसिद्धः तस्मिन् कर्मण्युपपदे हि घये इत्यस्माद्धातोरुपसर्गे क इति कः । उपपदतकारस्य लोपः छान्दसः पुल्लिङ्गत्यनुसारेण असुन्प्रत्ययः किमिदिति नपुंसकमेवेदं रिपुहतनाशयकारीत्यर्थः । यस्य तृतीयं वपुः एतन्मधुः । मधुशब्दः सुखवाची । मधुघोरस्तुनः पिता इति प्रयोगात् । वशब्दः शास्त्रार्थपरम्परया तीर्थवाची + + + + + स्वरित्यत्र आकार लोपः । भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपचारः । इत्याशयवान् । नित्यापरोक्षं भगवन्तं सम्बोध्य स्तौमि निःशेषेति । भूतिः महालक्ष्मीः ॥ वचनप्रसूनमाला जयतीर्थाख्यभिक्षुणा रचिता ।

प्रीयतां हृदये सदये कमलामहितेन पुरुषेण ।

अनुव्याख्यामृताम्भोधेः समुत्पन्ना विनिर्मला ॥

इयं न्यायसुधासर्वैर्विबुधैः सेव्यतां सदा ॥ * ॥ इति श्रीमत् पूर्णप्रमति भगवत्पादसूक्तेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना कृतायां टीकायां विषमपदवाक्यार्थविवृतौ चतुर्थेऽध्यायेऽस्मिन् चरमचरणः पर्य्यवसितः ॥ * ।

Colophon. इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्यविरचितस्यानुव्याख्यानस्य टीकायां श्रीमज्जयतीर्थाख्याचार्य्यविरचितायां न्यायसुधायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ * ॥ रामकृष्णवेदव्यासाय मङ्गलम् ॥ * ॥

विषयः । आनन्दतीर्थकृत-ब्रह्मसूत्रानुव्याख्यानस्य व्याख्यानम् ॥

**No. 162.** पञ्चाङ्गकवचस्नपनपद्धतिः By कृष्णानन्द. Substance, country-made paper, 15 x 3 inches. Folia, 6. Lines, 5 on a page. Extent, 100 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garveta, Grâm Khunverâ, Late Paṇḍit Râmtâraṇa Siromaṇi. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो रामचन्द्राय । अथाभिषेक विधिः ।

प्रागुदक्षा × × × × × × × × × पताकाभि-
रलङ्कृते नानासुगन्धिना सुरभीकृते चन्द्रातपपरिभूषिते मण्डपद्वयं कार्य्यं
एकमभिषेकमण्डपं अपरं पञ्चमण्डपञ्च । तत्राभिषेकमण्डपं × × ×
× × चतुर्द्वारसमन्वितं भूपतिहस्तपरिमिताष्टतयवेष्ठ्युक्तसुबौन् रक्त-
पीत-नील-श्वेत-धूम्रान् गृहीत्वा तेनैवाभिषेकमण्डपं निर्म्माय पञ्चवर्ण-
गुण्डिकया पूर्व्ववत् पञ्चमण्डपं × × × × × स्वगराभिमुखीकृत्य
भूपतिमुपवेश्य मन्त्रिवर्गपुरःसरं शङ्खतूर्य्यादिध्वनिमङ्गलध्वनिवेदध्वनिभिः
अथ संस्थितं श्वेताम्बरधरं शान्तं सौम्यौषं × × × × × ×
× × × × + + यथाशक्त्युपचारैः पूजयेत् ॥ इत्यादि ।

**End.** यथा ब्रह्मयामले ।

नानाभक्तिविशेषैश्च तथा मिष्टान्नपानकैः ।
तदुक्तहित्रिजो विप्रान् भोजयित्वा तु तोषयेत् ॥
एवं सर्व्वप्रकारेण कृतं यस्याभिषेचनं ।
तदादि तस्य पुंसस्तु अपमृत्युर्न जायते ।
ग्रहास्तुष्टा न कुर्व्वन्ति दुष्टरिष्टादिचेष्टितम् ॥

**Colophon.** इति कृष्णानन्दविरचिता यामलोक्तपञ्चाङ्गकवचस्नपनपद्धतिः समाप्ता ।

विषयः । नृपस्याभिषेचनकविधिकथनं तत्र पञ्चाङ्गकवचपूजाविधिकथनम् ।

---

**No. 163.** पथ्यापथ्य-निघण्टुः. Substance, country-made paper, 12 x 4 inches. Folia, 30. Lines, 11 on a page. Extent, 540 çlokas. Character, Nâgara. Date ? Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, fresh. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ पथ्यापथ्यनिघण्टुर्लिख्यते ।

त्रिगो रजःसत्त्वतमांसि विश्वं निर्माति पाति क्षिपति स्वयं यः ;

अथ पञ्चम्दारकश्चन्द्रवन्द्यः पायादपायाम्मनुजान् स ईशः ॥
आलोक्य वैद्यतन्त्राणि यत्नादेष निबध्यते ॥
व्याधितानां चिकित्सार्थं पथ्यापथ्यविनिश्चयः ॥
भिषक् सर्वेषु रोगेषु निर्दिष्टानि यथातथं ।
निदानपथ्यापथ्यानि त्रीणि यत्नेन चिन्तयेत् ॥

End. क्रोधं विषदाध्यशनं व्यवाय ताम्बूलमायासमपि प्रवातं ।
अम्लं च सर्व्वं लवणं च सर्व्वं संस्वेदनं तद्विविधानि तानि ।
निद्राभयं धूपकटूष्णधा च विषातुरो नैव भजेत् कदाचित् ॥

Colophon. इति विषरोगे पथ्यापथ्यसंग्रहः समाप्तः ।

विषयः । रोगग्रस्तानां पथ्यापथ्यनिरूपणम् ।

---

**No. 164.** पदावली. Substance, country-made paper, 17×3 inches. Folia, 16. Lines, 8 on a page. Extent, 500 çlokas. Character, Bengali. Date ? Place of deposit, Balihār, Dist. Rājsahi, Paṇḍit Kālicandra Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
प्रणम्य नीरदाभासं रामं ज्ञानैकविग्रहं ।
पदावलीं प्रवक्ष्यामि बालानां बोधहेतवे ॥
सिद्धोवर्णः समाम्नायः । सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः । न पुनरन्यथोपदेष्टव्य इत्यर्थः ॥

End. एकवर्ग इति किं तत्र वर्ग इति किं भर्त्सनं व्यञ्जनादित्येव भेदा ।

Colophon. इति पदावल्यां इन्त्रौ सन्धौ पञ्चमः पादः । अतः परं खण्डितं ।

विषयः । संक्षेपेण कातन्त्रीयपदादिनिरूपणम् ।

---

**No. 165.** पद्यमाला By जयतीर्थ. Substance, country-made paper, $12 \times 4\frac{1}{2}$ inches. Folia, 8. Lines, 9 on a page. Extent, 123 çlokas. Character, Nagarā. Date ? Place of deposit, Benares, Paṇḍita Vāmanācāryya. Appearance, old. Verse. Correct.

Beginning. श्रीगुरुभ्यो नमः । हरिः ओम् ॥

प्रणम्य श्रीपतिं सर्व्वान् गुरुंश्चापि प्रयीत्ययं ।

यथामति हरेः पूजाविधिं वैष्णवसंमतम् ।

आदौ देवगृहं न्यस्य कलशान् पञ्च-पल्लवान्,

आहरेत् तुलसीं दुर्वां पुष्पाणि चाक्षतानि च ॥

End. प्रमादतो विरोधाद्वा हरेः पूजा न चेद्भवेत्।

पठनात् पद्यमालायाः हरेः पूजाफलं लभेत् ॥

Colophon. इति श्रीमज्जयतीर्थमुनीन्द्रविरचिता पद्यमाला समाप्तिमगमत् ।

विषयः । माध्वसम्प्रदायस्थानां पूजाप्रकारः ।

---

No. 166. पद्यावली-टीका. Substance, country-made paper, 16×6 inches. Folia, 77. Lines, 12 on a page. Extent, 1,800 çlokas. Character, Bengali. Date Sk. 1723. Place of deposit, Dinājpur, Pandita Krṣṇadāsa Smṛtibhuṣaṇa. Appearance, fresh. Prose. Correct.

Beginning. श्रीगोपीनाथो जयति ॥

नव्याम्भोदकलेवरः कटितटे संनद्धपीताम्बरो

वंशीवादनतत्परो व्रजरमाचित्तोहरः सुन्दरः ।

× × × × × × × × ।

श्रीरूपगोस्वामिपदारविन्दं वन्देऽनिशं दीनजनैकबन्धुं ।

यस्यानुकम्पालवसाहसेन व्याख्यामिमां कर्त्तुमहं प्रवृत्तः ॥

End. कोष्णनीर्व्वचनीयः श्रीकृष्णो मदभीप्सितमभिदद्यात् मादृशानां अभिलाष-पूरकः स एवेति भावः । पादो छन्दे तुरीयांशे शैले प्रत्यन्तपर्व्वते इति मेदिनी ॥

शाके कालायमसुमिरजनीनाथसंख्ये शुभेयं ।

टीका विद्वज्जनहृदयसमाजादिनीनामधया ॥

पद्यावल्या व्रजनगरकृतावस्थितेनापि केन ।

श्रीमद्रामादरचरणपाभाजनेन व्यधायि ॥

× × × × × × × ×

श्रीश्रीमद्दैष्णवराजसभासभाजितसुगणगणैकपूर्णमिभीमां श्री श्रीमत् श्यामा-नन्दगोस्वामिपादानां शिष्योपशिष्यीभूतान्वये रटवीतदीयस्य ब्राह्मणकुलोद्भूत-

वैष्णववरस्य श्रीश्रीमद्दामोदराभिधस्वामिचरणस्य शिष्येण कृतैषा व्याख्या-
पूर्त्तिं गता ॥

Colophon. श्रीवृन्दावनधामतोऽलेखि हरनाथशर्म्मणा ।

विषयः । पद्यावल्या व्याख्यानं ॥

---

**No. 167. परब्रह्मज्ञानसूक्तं.** Substance, country-made paper, 15 x 5 inches. Folia, 4. Lines, 13 on a page. Extent, 120 çlokas Character, Nāgara Date ' Place of deposit, Benares, Paṇḍita Govinda Bhaṭṭa. Appearance, fresh. Prose. Correct.

Beginning. बृहस्पत इत्येकादशर्चं तृतीयं सूक्तं चाङ्गिरसस्य बृहस्पतेरार्षं नवमी जगती-
शिष्टा दश त्रिष्टुभः अनेन सूक्तेन ऋषिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं
स्तुतवान् । अतस्तद्देवत्यमिदं । उक्तं हि बृहद्देवतायां ।
सुज्योतिः परमं ब्रह्म योगाद्यत् समुपाश्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिरिति ॥ इत्यादि ।

End. ऋचामेकः पोषमास्ते पुपुष्वान् होमगर्भगेत्यादि निरुक्तानुसारेणार्थोऽभ्य-
धायि । एवं बृहस्पतिर्वेदितवेदार्थज्ञानं तुष्टाव । इत्यष्टमस्य द्वितीये
चतुर्विंशो वर्गः ।

Colophon. वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
श्रीपरब्रह्मज्ञानसूक्तं समाप्तं ।

विषयः । ब्रह्मविद्याकथनं ।

---

**No. 168. परमहंसोपनिषद् भाष्यम्.** Substance, country-made paper, 11 x 6 inches. Folia 12. Lines, 13 on a page. Extent, 320 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Govinda Bhaṭṭa Appearance, fresh. Prose Correct.

Beginning. अथ जीवन्मुक्त्युपकारिणं विद्वत्संन्यासं निरूपयामः । विद्वत्संन्यासश्च
परमहंसोपनिषदि प्रतिपादितः । तच्चोपनिषद्यनूद्य व्याख्यास्यामः ।
वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।

यं नत्वा सुकृत्याः सुखं नमामि गजाननम् ।
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तत्रादौ विद्वत्संन्यासयोग्यं प्रश्नमवतारयति । अथ योगिनामिति । ·

End. आद्दृतिः शास्त्रार्थसमासार्था ।
जीवन्मुक्तिविवेकेन बन्धं हार्दं निवारयन् ।
पुमर्थमखिलं देयाद्विद्यातीर्थमहेश्वरः ॥

Colophon. इति विद्यारण्यकृतं भाष्यं ।

विषयः । अथर्ववेदीयपरमहंसोपनिषद्व्याख्या ।

---

**No. 169.** पवमानयन्त्रं. Substance, country-made paper, 8×3 inches. Folia, 8. Lines, 10 on a page. Extent, 120 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. श्रीगणेशाय नमः ।
अथ पवमानयन्त्रदेवताप्रारम्भः । तत्र कोष्ठदेवताः । प्रथमकोणे ब्रह्मणे नम इति ब्रह्माणं आवाहयामि, पूजाक्रमः, ब्रह्मणे नमः ब्रह्माणं ।

End. अग्निं दूतं वृणीमहे इति अग्नये अग्निं । मधुनः परापरेति, नैर्ऋत्ये निर्ऋतिं वायो शतं इति वायवे वायुं, तमीशानं इति ईशाने ईशानं, शीरस्तु ।

Colophon. + + + + + ।

विषयः । पवमानहोमे मण्डले देवतास्थापनविधिः ।

---

**No. 170.** पवमानन्यासः. Substance, country-made paper, 8×3 inches. Folia, 11. Lines, 7 on a page. Extent, 110 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Vāmanācāryya Appearance, old. Prose. Correct.

Beginning. श्रीगणेशाय नमः ।
आचम्यप्राणानायम्य देशकालौ स्मृत्वा मम समस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पवमानमन्त्रन्यासपूर्वकं पवमानानुष्ठानमहं करिष्ये ।

End. विष्णोः कर्माणि पश्यत, नेत्रयोः, तद्विष्णोरित्यस्त्राय फट् । भूर्भुवः स्वरिति दिग्बन्धः । अथ देवपूजामारभेत् ।

Colophon. इदं पुस्तकं लिखितं गर्दे उपनामकरघुवीरशर्मणा स्वार्थं परार्थं चेति ।

विषयः । ऋग्वेदान्तर्गतपवमानमन्त्रेण न्यासकथनम् ।

---

No. 171. पाकतन्त्रकुशकण्डिकाप्रयोगः. Substance, country-made paper, 11×3 inches. Folio, 30. Lines, 11 on a page. Extent, 950 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. स्वशाखानुसारिमधुपर्कप्रयोगः ।

स्वव्याख्यां पुरा कृत्वा देवभट्टेन धीमता ।
अथर्वपाकतन्त्रस्य प्रयोगोथ वितन्यते ॥

End. वैदिकानां हितार्थाय प्रयोगोऽयं मया कृतः ।
कौशिकास्तेन तुष्यन्तु स्वयन्तु सुखेन हि ॥

Colophon. इति पाकतन्त्रे शान्तिप्रयोगः ।

विषयः । अथर्ववेदोक्त-गृह्यकर्मप्रकृतिभूतकुशकण्डिका ।

---

No. 172. पाणिनीयशिक्षाविवरणम्. Substance, country-made paper, 10×5 inches Folia, 7. Lines, 11 on a page. Extent, 400 çlokas. Character, Nāgara. Date Sm. 1832. Place of deposit, Tikāri, Zilla Gayā, Paṇḍita Çāstri Appearance, tolerable Prose. Generally correct.

Beginning. श्रीगणेशाय नमः ॥

पातु वो निकषग्रावा मतिहेम्नः सरस्वती ।
प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥
छन्दः-कल्प-निरुक्तानि विहृतानीह सूरिभिः ।
शिक्षाविवृता यस्मात् तस्मात् तां विवृणोम्यहम् ॥
अथ शिक्षां प्रवक्ष्यामि । अथेत्ययमानन्तर्यो वेदाध्ययनस्यानन्तरमङ्गपाठः ॥ इत्यादि ।

End. स्वर्गादीनि परिमितकालानि भोजयितुं शक्यन्ते ।
मोक्षाख्यन्तु अपरिमितकालावच्छिन्नं सुखरूपमित्यर्थः ॥

**Colophon.** इति श्रीपाणिनीयशिक्षा-व्याख्या समाप्ता ॥
॰ संवत् १८११ ॥

विषयः । पाणिनीय शिक्षायाव्याख्यानम् ।

---

**No. 173.** पार्थिवशिवकवचं (उन्मत्तभैरवीतन्त्रोक्तं). • Substance, country-made paper, 10×2¼ inches. Folia, 3. Lines, 6 on a page. Extent, 36 ślokas Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Paṇḍit Harān Candra Tarkavāgīśa. Appearance, fresh. Verse. Correct.

**Beginning.** ॐनमः शिवाय । अथ पार्थिवशिवकवचं ।
देव्युवाच ।
देवदेव महादेव विरूपाक्ष त्रिलोचन ।
कृपया कथ्यतां देव पार्थिवस्य महात्मनः ।
कवचं दुर्लभं तस्य श्रोतुमिच्छामि साम्प्रतम् ।
श्रीईश्वर उवाच ।
देवेशि शृणु चार्व्वङ्गि जगद्धात्रि मनोरमे ।
कवचं तस्य गिरिजे त्रिषु लोकेषु गोपितं ॥
तव स्नेहात्मया देवि कथितं कवचं शुभं ।
अप्रकाश्यं परं गुह्यं साधकाभीष्टदायकं ॥
कवचस्य ऋषिरुन्मत्तभैरवोऽनुष्टुप्छन्दः पार्थिवशिवो देवता सर्व्वकामार्थ-सिद्धये विनियोगः ॥ इत्यादि ।

**End.** कवचं धारयेद् यस्तु साधको दक्षिणे भुजे ।
देवा मनुष्या गन्धर्व्वा वश्यास्तस्य न संशयः ॥
कवचं शिरसा यस्तु धारयेद् यतमानसः ।
करस्थास्तस्य देवेशि अणिमाद्यष्टसिद्धयः ॥
काम्यस्वस्त्ययने देवि पूजयेत् पार्थिवं शिवं ।
तत्रैव प्रपठेद् देवि सर्व्वार्थी फलभाग् भवेत् ॥

**Colophon.** इत्युन्मत्तभैरवीतन्त्रे देवीश्वरसंवादे पार्थिवशिवकवचं समाप्तं ॥ ॐ तत् सत् ॥

विषयः । पार्थिवशिवकवचस्य माहात्म्यादिकीर्त्तनम् ।

---

**No. 174.** पाश्चात्यवैदिककुलपञ्जिका. Substance, country-made paper, 20×4 inches. Folio, 123. Lines, 6 on a page. Extent, 2,460 çlokas. Character, Nāgara. Date Place of deposit, Benares, Paṇḍit Çambhu Candra Vidyāsāgara. Appearance, old. Verse. Correct.

**Beginning.** पाशाङ्कुशसुधापूर्णं बिभ्रन्त जयदुन्नाः (?) ।
विघ्नं निघ्नन्तु नो ऽभक्तनिघ्नविघ्नपते र्भुजाः ॥
देवेन्द्रोपेन्द्रचन्द्राद्यैर्वन्द्या वृन्दारकैर्मुदः ।
गिरीन्द्रनन्दिनीं वन्द्ये सच्चिदानन्दरूपिणीम् ॥
रविशशिदहनाचः कोपविध्वंसदचः
प्रचतसुरविपचः स्वानुरक्तैकरचः
प्रमथदनुजरचः प्रेतवेतालयच-
प्रभृतिदमनदचः पातु नः सर्व्वभचः ॥
वन्दे शौनकमादरान्मुनिवरं श्रेष्ठं वशिष्ठं तथा
शाण्डिल्यं श्रुतिमण्डितं वरभरद्वाजं यशोभाजनं
सावर्णिञ्च सुवर्णतः श्रमिगुणं पञ्चैव ते वन्दिताः ॥

**End.** इति रामकान्तस्य. तद्भ्रातुः श्रीकण्ठस्य यथा—
श्रीकण्ठकः परिणिनाय × × ×
× × × जननस्य महाधनस्य
श्रीयुक्त रामनवसिंहसमाह्वयस्य
श्रीशारिणीं गुणगणाकलितां तनूजां ॥ इति श्रीकण्ठस्य ।

**Colophon.** ... ... ... ... ... ...

विषयः । वङ्गीयपाश्चात्यवैदिकानामागमनकालनिर्णयस्तेषां वंशपरम्पराकथनञ्च ।

---

**No. 175.** पितृमेधसूत्रम्. Substance, country-made paper, 12×4 inches. Folio, 10. Lines, 11 on a page. Extent, 250 çlokas. Character, Nāgara. Date Sm 1804. Place of deposit, Benares, Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।
अथातः पैतृमेधिकं दहनं पुरुषो( . . )स्य प्रियतमेति विज्ञायत ।
आहिताग्नेर्मरणसंशये प्राचीनावीती दक्षिणदेशं जोषयते ॥

**End.** अथातः पैतृमेधिकं द्रव्यं, अथातः पैतृमेधिकमपरेद्युरथात उत्तरं नवम्यो (.)ष्टाम्यमिष्टकाः प्रतिदिशमथाञ्जनां द्युपः षट्, परि: ओम् ।

**Colophon.** भारद्वाजसूत्रे पितृमेधसूत्रं सम्पूर्णम् । संवत् १८०४ ।

विषयः । आपस्तम्बशाखीयानां पितुरन्त्येष्टिक्रियाकथनम् ॥

---

**No. 176.** पितृपशूज्जीवनम्. Substance, country-made paper, 10 x 4 inches. Folio, 36. Lines, 9 on a page. Extent, 540 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीरामचन्द्राय नमः ।
ॐ श्रीमदानन्दतीर्थार्य्यहृदयाम्भोजविहरम् ।
श्रीनन्दनन्दनं वन्दे नन्दनानन्ददायिनम् ।

**End.** अग्निषोमीयदेवताकपश्वालम्भनं विधीयते इति चेत् अत्रापि पितृपशूद्देश्यकं करण विधीयते इति ब्रूम इति न कोऽपि शङ्काकलङ्कः (इतो नास्ति) ।

**Colophon.** — — —

विषयः । माध्वमते पितृपशुविधानम् ।

---

**No. 177.** पितृपशुप्रतिपादकविधिवाक्यप्रकरणम्. Substance, country-made paper, 10 x 4 inches. Folia, 16 Lines, 16 on a page. Extent, 640 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** मोक्षधर्मेषु यज्ञप्रकरणे पितृपशुप्रतिपादकानि विधिवाक्यानि ।
एषोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि ।
नारायणो महाभूतं विश्वसृक् हव्यकव्यभुक् ।

**End.** न च पुरोडाश एवाभीष्यते न पश्वाकारपिष्टिरिति वाच्यम् । तत्र पशुपदप्रयोगात्. न चायमर्थवादः, लिङ्-श्रवणात्, अतएव न लक्षणा, विधौ लक्षणायोगात्. अत्र बहुवक्तव्यमस्ति विस्तरभिया नोच्यत इत्यलमति विस्तरेण ।

Colophon. — — — — — —

विषयः। माध्वमतानुयायी पितृपक्षप्रतिपादकविधिवाक्यसंग्रहः ॥

---

No 178. पितृपक्षखण्डनम्. By टीकाकारशर्म्मा. Substance, country-made paper, 12×4½ inches. Folio, 19. Lines 5 on a page. Extent, 228 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Pandit Vāmanācāryya. Appearance, old Prose. Correct.

Beginning. सिंचन्नामविमृष्टनिर्भयवरान् धत्ते दधानां शिवां
दक्षोष्ठाधरयोः क्रमेण जगतां धात्रीं तथा वामतः।
कण्ठे सर्पधरां गलद्रुधिरया सव्यांहरागोज्वलां
दिग्वस्त्रां मनुजाकृतिं च दधतिर्व(.)र्युतां कालिकाम् ॥

End चविंमाधर्मतात्पर्य्याद्रुतम्वकुलोत्पन्नपुरुषशतकेन यद्धर्मपालप्रभालज्जितचन्द्रि-(.)कालिकापादपद्मपराशय(.)यापनोद्बोधितशक्तेन्द्रवर्ध्यन्तृपद्माजन्मादेन गङ्गा-गौरगौर(...)तुलोकत(..)भुकुटिभीषणाकल्मषप्रमर्दरिभङ्गोद्भवेन टीका-कारशर्मणा कृतः पितृपक्षखण्डनाख्योयं ग्रन्थः समाप्तः।

Colophon. — — — — — —

विषयः। माध्वमते अग्निष्टोमादौ साक्षात् पशुहननमविधेयं किन्तु पिष्टपशुहननमेव कर्त्तव्यं; तद्विषयप्रमाणान्युक्तान्यस्मिन् ग्रन्थे।

---

No. 179. पितृपक्षखण्डनवाक्यार्थदीपिका. By रत्नपाल. Substance, country-made paper, 12×4½ inches. Folio, 19. Lines, 10 on a page. Extent, 175 çlokas Character, Nāgara. Date ? Place of deposit, Benares, Pandita Vāmanācāryya. Appearance, old Prose. Correct.

Beginning. श्रीगणेशाय नमः।
प्रणम्य शङ्करं नत्वा परानन्दं दयाकरम्।
× × + × ×
ग्रन्थसमाप्ति-ग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमनाय समुचितस्वेष्टदेवता-लक्षणरूपं मङ्गलाचरणं शिष्यशिक्षार्थे व्याख्यातृश्रोतॄणां प्रवृत्तौ ग्रन्थतो मङ्गलाय च निबध्नाति सिंचन्नामित्यादि।

End. परमानन्दसन्तोषतुष्टये दीपिका मया।
रत्नपालेन रचिता कुर्वे(..) यथा पुरा ॥

**Colophon.** इति पिष्टपशुमण्डनव्याख्यायां दीपिकायां समाप्तिमगमत् । फाल्गुने कृष्णपक्ष शिवरात्रौ ।

विषयः । पिष्टपशुमण्डनव्याख्या ॥

---

**No. 180.** पुण्यलक्ष्मीसम्वादः. Substance, country-made paper, 12 × 1½ inches. Folio, 4. Lines, 13 on a page. Extent, 160 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, old. Prose. Correct.

**Beginning.** अथ पुण्यलक्ष्मीसम्वादो लिख्यते ।
अङ्गदेशे महादेशे कनकाख्यं पुरोत्तमम् ।
कनकध्वजो राजाभूत् वल्लभा कनकावती ॥

**End.** सुन्दरं धर्मकर्माङ्गं दयामूलं जिनोदितम् ।
विधत्तयेऽपि विद्यातं दानशीलतप ( . . ) ॥

**Colophon.** इति श्रीपुण्यलक्ष्मीविवाददृष्टान्तः समाप्तः ।

विषयः । जैनधर्ममाहात्म्यकीर्त्तनम् ।

---

**No. 181.** पुत्रदस्तोत्रम्. Substance, country-made paper, 11 × 2 inches. Folio, 1. Lines, 6 on a page. Extent, 9 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā Grām Khunverā, Paṇdit Hārān Chandra Tarkavāgisā. Appearance, old. Verse. Correct.

**Beginning.** श्रीरामाय नमः ।
श्रीईश्वर उवाच ।
शृणु देवि प्रवक्ष्यामि रामस्य परमात्मनः ।
स्तोत्रं द्वादशनाम्ना च पुत्रदं वाञ्छितप्रदम् ॥
जानकीवल्लभः श्रीशः कौशल्यानन्दवर्द्धनः ।
रावणारिः खरध्वंसी दयालुः सेतुबन्धकृत् ॥
हनूमत्प्रीतिकर्त्ता च सुग्रीवेशः सतां पतिः ।
रामो दाशरथिश्चैव ह्येतद्द्वादशनामकम् ॥
इमं स्तोत्रं महापुण्यं यः पठेद्धारयेत् सदा ।

फलं तस्य प्रवक्ष्यामि शृणु देवि वरानने ॥
अपुत्रो लभते पुत्रं गर्भिणी जनयेत् सुतम् ।
अनवत्या च या नारी जीववत्सा भवेद्ध्रुवम् ॥
पठेद्वा पाठयेद्वापि त्रिकालं नियतः शुचिः ।
संवत्सरस्य मध्ये तु पुत्रवान् नात्रसंशयः ॥
न प्रकाश्यं न देयञ्च गोपनीयं प्रयत्नतः ।
देयं शिष्याय भक्ताय वैष्णवाय विशेषतः ॥

Colophon. इति श्रीरामतापनीये उमामहेश्वरसंवादे पुत्रदस्तोत्रं समाप्तम् ॥

---

**No. 182.** पुत्रप्रतिग्रहविधिः. Substance, country-made paper, 8 x 3 inches. Folio, 3 Lines, 11 on a page Extent, 75 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya Appearance, old. Prose Correct.

**Beginning.** अथ दत्तकविधिमाह । शौनकः ।
ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत् ॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमोऽपि वा ।
वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिषु ॥

**End.** यद्येवं क्षेत्रोरसः पुत्र उत्पद्यते तृतीयभागे प्रभवतीति वचनाच्च बौधायन इति ।

**Colophon** इति पुत्रप्रतिग्रहविधिः ।

विषयः । दत्तकपुत्रविचारः ॥

---

**No. 183.** पुष्पमाला. Substance, country-made paper, 12 x 4½ inches. Folio, 9. Lines, 19 on a page. Extent, 720 çlokas. Character, Nāgara. Date Place of deposit, Benares, Dikmaṇḍalācāryya Mahārāja Bālacandra. Appearance, old. Verse. Correct.

**Beginninɣ.** सिद्धम्, कम्मविप्पमक्कमस( . . )रं
पणमामि सुमइपोत्तसुपयमवेपयासनं वीरम् ॥

**End.** जाव जिन सासनमि( . . ) जावय धम्मो
जयमि विल्लु( . ) र, ताव । परिभ्रमाउ एवा भव्वे विंसया सुयणवि ।

**Colophon.** पुनश्चमाख्याशेषता ।

विषयः । जिनस्तुतिः ।

No. 184. पूर्व्वपक्षसमाधानम् . By हरिशर्म्मा . Substance, country-made paper, 11 x 5 inches. Folio, 43. Lines, 12 on a page. Extent, 1,700 çlokas. Character, Nāgara. Date Place of deposit, Tikari, Dist. Gayā, Pandita Çastri. Appearance, fresh Prose Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

नमस्कृत्य शिवं साम्बं गणनायकसंयुतम् ।
लभन्ते यत् प्रसादेन लोकाः सर्व्वमनोरथम् ॥
पुरा रामसभायां ये व्याकृताः मम सन्निधौ
पूर्व्वपक्षाः कृताः लोकैः पण्डितानां समाधयः
लिख्यन्ते ते मया गवेषकाराय धीमतां
बालानां सुगमैः पद्यैः श्रीहरिशर्म्मणा ॥

**End.** तस्मात् पूर्व्वापरविरोधो दुष्परिहरः भाष्यपरिशीलनमनाश्रित्य विवक्षयन्तु सुधियः ॥

विषयः । महाभाष्यस्य पूर्व्वपक्षकथनं तत्समाधानञ्च ॥

No. 185. पूर्व्वमीमांसापरिभाषा . By कृष्णयज्वा . Substance, country-made paper, $12 \times 4\frac{1}{2}$ inches Folio, 27. Lines, 9 on a page. Extent, 459 çlokas. Character, Nāgara. Date ? Place of deposit, Benares, Pandita Govinda Bhatta, Appearance, old. Prose. Correct.

**Beginning.** सूर्य्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥
बालानां शास्त्रसिद्धार्थसंप्रबोधाय धीमताम् ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥
इह खलु भगवता जैमिनिना द्वादशलक्षण्यां पूर्व्वमीमांसायां धर्माधर्म-वेदानुष्ठानोपयोगितया विचारितौ तत्र वेदबोधितेष्टसाधनताको धर्मः ।

**End.** पुरोडाशस्य प्रयाजशेषेणाभिघारणं ततः पयसोऽभिघारणमिति सुस्पष्टम-

क्रमाद्यभिचारणक्रमः । इत्येवं श्रुत्यर्थपाठस्थानमुख्यार्थप्रवृत्तिक्रमैरेव कर्मानुष्ठानम् । अन्यथानुष्ठाने वैगुण्यमित्यलम् ।

Colophon. इति श्रीकृष्णयज्वकृता पूर्व्वमीमांसापरिभाषा सम्पूर्णा ।

विषयः । जैमिनिसूत्रोक्तकर्म्मणां संक्षेपेण विनियोगकथनम् ॥

---

**No. 186.** पृथ्वीवराहसंवादः । (आदिवाराहीयः) Substance, country-made paper, 8×3 inches. Folio, 11 Lines, 8 on a page. Extent, 250 çlokas. Character, Bengali, Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Telivani, Pandit Nilkumar Gosvāmi. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमः श्रीकृष्णाय । आदिवराहतन्त्रे ।

पृथिव्युवाच ।

अनन्तकोटिब्रह्माण्डं महाम्भःपरिस्थितम् ।
विष्णोः स्थानं परं तेषां प्रधानप्रियमुत्तमम् ॥
मत्परं नास्ति कृष्णस्य प्रियस्थानमनोत्तमम् ।
तदहं श्रोतुमिच्छामि कथयस्व कृपानिधे ॥

श्रीवराह उवाच ।

गुह्याद्गुह्यतमं गुह्यं परमानन्दकारणम् ।
अत्यद्भुतं रहस्यानां रहस्यं परमं शिवम् ॥
... ... ... ...
शाश्वतं स्थानमूर्द्धन्यं विष्णोरेकान्तवल्लभम् ।
नित्यवृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम् ॥

**End.** गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदाधरम् ।
किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम् ॥
पूर्व्वद्वारे द्वारपालं गौरं विष्णुं प्रकीर्त्तितम् ।
कृष्णवर्णं चतुर्बाहुं शङ्खचक्रादिभूषितम् ।
दक्षिणद्वारपालश्च श्रीविष्णुं कृष्णवर्णकम् ॥

Colophon. इति आदिवराहतन्त्रे श्रीवराहपृथ्वीसंवादे श्रीमद्गोविन्दलीलायां परिपूर्णाख्यं समाप्तम् ॥

विषयः । वृन्दावनस्य माहात्म्यादिवर्णनम् ॥

---

**Beginning.** ॐ नमो गणेशाय ।

प्रयोजनमुद्दिश्यैव पुमांस्तदुपाये प्रवर्त्तन्ते अतः शास्त्रस्य प्रथमतः प्रयोजनं दर्शयन्ति शास्त्रकृतः, तत्र अतः प्रयोजनं सुखं तद्भोगो दुःखाभावश्च तत्त्वञ्च अन्येच्छाधीनेच्छाविषयत्वं न तु प्रयोजनान्तरजनकत्वे सति प्रयोजनत्वं सुख-साक्षात्काररूपभोगं प्रति विषयतया जनके सुखेऽव्याप्तेः गौणप्रयोजनत्वं अन्ये-च्छाधीनेच्छाविषयत्वञ्च भोजनादेस्तत्र सुखादिरूपफलानुसन्धानादेवेत्यादि ॥

**End.** उत्तरवाक्यस्थेनापि वाकारेण पूर्व्वकल्पव्यवच्छेदसाचित्यस्य उत्तरकल्पे, उत्तरकल्पव्यवच्छेदसाचित्यस्यापि पूर्व्वकल्पे बोध इतिव्युत्पत्तेः व्रीहिभिर्यजेत यवैर्वा इत्यादावपि व्रीह्यादौ यवासाचित्यबोधस्यापि व्युत्पत्तिसिद्धत्वात् इत्यन्यत्र विस्तरः ।

**Colophon.** इति गदाधरभट्टाचार्य्यविरचितमुक्तिवादार्थः सम्पूर्णः ॥ श्रीश्रीरामः शरणं ।

विषयः । सायुज्यादिभेदेन मुक्तेर्निरूपणम् ॥

---

**No. 234.** मुमुर्षुमृतकृत्यादिपद्धतिः By शङ्कर शर्म्मा. Substance, palm leaves, 10 × 1⅓ inches. Folia, 37 Lines, 3 on a page. Extent, 500 çlokas. Character, Bengali. Date ? Place of deposit, Grām Bhādughar, Post Brāhmanberiā, Zilla Comilla, Paṇḍit Amara Candra Nyāyaratna Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥

नत्वेशं कृत्यनिष्ठानां मुदे शङ्करशर्म्मणा ।
मुमुर्षुमृतकृत्यादिपद्धतिः सव्यवस्थिका ॥
तन्यते तु व्यवस्थादावनुकृत्य निदेशनं ।
स्मार्त्तानुसारिणी ज्ञेया विद्वद्भिरपि तादृशैः ॥

तत्रादौ मुमुर्षुकृत्यं ।

शुद्धितत्त्वे हारीतः ।
शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥ इत्यादि ।

**End.** विष्णुधर्म्मोत्तरे ।
यस्योपयोगि यद् द्रव्यं देयं तस्यैव तद्भवेत् ॥

यथोदितं पापवमोचे दानं तच तड़ागमदीमुत्सवपूर्वकं प्रतिष्ठापरोऽनुपेते
जलं दद्यात् तोकारात् पूर्वं इच्छया ।

**Colophon.** ( अतःपरं खण्डितं ) ।

विषयः । जलस्य शुभत्वेन कर्त्तव्यनिरूपणम् । तथादौ शुभपूर्त्तत्वं । जलसंस्कारविधानम् । जलाशयपर्यन्तरक्षा-पर्यन्तरक्षाविधिकथनम् । जलोत्सर्गादिफलादिनिरूपणम् । दानपद्धतिः ।

---

No. 235. मुरलीचन्द्रिकागुञ्जमालाप्रादुर्भावः. Substance, country-made paper, 15 × 5 inches. Folia, 2. Lines, 10 on a page. Extent, 55 çlokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Candrakoṇā, Grām Ayodhyā Raghunāthvāṭi, Babu Cakrapāṇi Raya. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ॥

यस्य स्मरणमात्रेण नरो याति निरापदं ।
श्रीकृष्णे लभते भक्तिं तं नमामि जगद्गुरुं ॥
श्रीनारद उवाच ।
मुरली केन तपसा प्राप्ता कृष्णं जगत्पतिं ।
या करोति सदा कृष्णमुखाम्भोजचुम्बनम् ॥ इत्यादि ।

**End.** इत्येतत्कथितं पुत्र तत्त्वं परमशोभनं ।
गोपनीयं प्रयत्नेन न देयं यस्य कस्यचित् ॥
सर्व्वारिष्टप्रशमनं जगदानन्दकारणं ।
सर्व्वसम्पत्करं तत्त्वं प्रेमभक्तिप्रदायकम् ॥
एतच्छृणोति यस्तत्त्वं जीवन्मुक्तो भवेद्धि सः ।
यस्मिन् गृहे विलिखितमेतत् तिष्ठति नित्यशः ।
तत्र कृष्णो जगन्नाथः सर्व्वदुःखनिवारकः ॥
तत् तस्य भवनादेव शोकातीतो भवेन्नरः ।
सर्व्वपापविमुक्तोऽसौ भक्तानां प्रवरो भवेत् ॥

**Colophon.** इति पद्मपुराणे पातालखण्डे ब्रह्मनारदसंवादे मुरलीगुञ्जचन्द्रिकानां प्रादुर्भावः पञ्चविंशतितमोऽध्यायः ।

विषयः । वंशीचन्द्रिकागुञ्जमालानां कृष्णप्राप्तयेतपश्चर्य्यादि-कथनम् ।

---

No. 236. मूल्याध्यायविवरणम् By कामदेवदीक्षित. Substance, country-made paper, 10×3 inches. Folia, 5. Lines, 14 on a page. Extent, 150 çlokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City. Paṇḍit Vāmanācārya. Appearance, old. Prose. Correct.

**Beginning.**

प्रणम्य विघ्ननाशं च मुनिं कात्यायनं ततः ।
दीक्षितान् वासुदेवाख्य गुरून् नत्वा सरस्वतीम् ॥ १ ॥
हितार्थं याज्ञिकानाञ्च मूल्याध्यायस्य काङ्क्षितम् ।
बहुतत्वात्पुराचार्य्यैर्व्याख्यानं क्रियते मया ॥ २ ॥

**End.** व्याख्यातः कामदेवेन मूल्याध्यायः सतां प्रियः ।
तवत्येन प्रयासेन प्रीयतां परमेश्वरः ॥

**Colophon.** इति श्रीदीक्षितकामदेवकृतं मूल्याध्यायविवरणं समाप्तम् ।

विषयः । यज्ञीयद्रव्याणां मूल्यनिरूपणं ॥

---

No. 237. मेघदूतटीका By दिवाकर उपाध्याय. Substance, palm leaf, $11 \times 1\frac{1}{2}$ inches. Folia, 95. Lines, 4 on a page. Extent, 1200 çlokas. Character, Bengali. Date ? Place of deposit, Dinājpur, Babu Giriśacandra Cakravartti. Appearance, very old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ॥

कश्चिदिति ॥

कश्चित् यक्षः रामगिर्य्याश्रमेषु वसतिं चक्रे इत्यन्वयः । तत्र चाश्रमेष्विति बहुवचनात् इतस्ततः परिभ्रमणेनैव धृतिं बबन्धेति ध्वनितं । इत्यादि ।

**End.** एवमनेन प्रकारेण दुःखं कथयन्नाशिषं ददाति ते तव क्षणमात्रमपि विद्युता नायिकया विच्छेदो माभूत् मा भविष्यति कान्तयामान्ये त्वत् × × × × इति ॥ * ॥

**Colophon.** इति श्रीदिवाकरोपाध्यायकृता मेघदूतटीका समाप्ता ॥ * ॥

विषयः । कालिदासकृतमेघदूतकाव्यस्य व्याख्यानम् ॥

---

**No. 238. मोक्षोपायः.** Substance, Tedet leaf, 14 x 2. Folia, 110. Lines, 5 on a page. Extent, 2750 çlokas. Character, Maithili. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā. Late Paṇḍit Rāmatāraṇa Śiromaṇi. Appearance, old. Verse. Correct.

**Beginning.** ( १—३ पत्रं नास्ति ) ।

दीर्घरोमा महातेजा विश्वामित्रोऽभ्यभाषत ।
सदृशं राजशार्दूल तवैवैतन्महीतले ।
महावंशप्रसूतस्य वसिष्ठवशवर्त्तिनः ।
× × × × × × ॥
तस्य विघ्नकरा घोरा राक्षसा मम संस्थिताः ।
त्रातुमर्हसि मामार्त्तं शरणागतमर्थिनम् ।
तवास्ति तनयः श्रीमान् दृप्तशार्दूलविक्रमः ।
× × × सदृशो वीर्य्ये रामो रक्षोविदारणः ।
तं पुत्रं राजशार्दूल राम सत्यपराक्रमं ।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥
× × × × × ।
कुमाराक्रान्तमात्रं वा नैनं शक्ष्यन्ति राक्षसाः ॥

वाल्मीकिरुवाच ।

तथा वसिष्ठे ब्रुवति रामभृत्यजनान् नृपः ।
कथं कौतुक् स्थितो राम इति पप्रच्छ बुद्धिमान् ॥

जना ऊचुः ।

रामो राजीवपत्राक्षो यतः प्रभृति चागतः ।
स विप्रतीर्थयात्रायास्ततः प्रभृति दुर्म्मनाः ॥
यत्नात् प्रार्थनयास्माकं निजव्यापारमाह्निकं ।
सोऽयमम्लानवदनः करोति न करोति च ।
किं सम्पदा किं विपदा किं गेहेन किमीहितैः ।
सर्व्वमेवासदित्युक्त्वा तूष्णीमेवावतिष्ठते ॥
× × × × × ।
ईदृशः स्यात्तथाप्यस्य न द्रव्याणि महीतले ।
प्राकृते व्यवहारे तं यो नियोजयितुं क्षमः ॥

विश्वामित्र उवाच ।

एवमेतन्महाप्राज्ञ भवन्तो रघुनन्दनं ।
इच्छामयन्तु नरिता चरितं चरिता इव ॥
एष मोक्षो रघुपतेर्नापक्षो नापि चाप्यतः ।
विवेकवैराग्यवतो बोध एष महोदयः ॥
एतस्मिन् त्याजिते युक्त्या मोक्षे स रघुनन्दनः ।
विश्रान्तिमेष्यति पदे तस्मिन् वयमिवोत्तमे ॥
× × × × × × ।
एवं मुनीन्द्रे ब्रुवति पितुः पादाभिवन्दनं ।
कर्त्तुमभ्याजगामाथ रामः कमललोचनः ॥
× × × × ।

दशरथ उवाच ।

पुत्र प्राप्तविवेकस्त्वं कल्याणानाञ्च भाजनं ।
जडवन्तो × × × × खेदो × × × हीयताम् ॥
वृद्धविप्रगुरुप्रोक्तं त्वाहशेनानुतिष्ठता ।
पदमासाद्यते पुण्यं × × × मनुष्यावता ॥
× × × × × × ।

वसिष्ठ उवाच ।

राजपुत्र महाबाहो शूरस्त्वं विजितास्त्वया ।
दुरुच्छेदा दुरारम्भा × × × विषया × × ॥
कि × × × × × × × मोग्ये व्यामोहसागरे ।
निमिमज्जसि कल्लोलवड्ले आत्मशान्तिनि ॥

विश्वामित्र उवाच ।

किं निष्ठाः के च ते केन क्रियन्तः कारणेऽर्थे ।
चाधयः प्रतिलुम्पन्ति × × × × × × × × ॥
यथाभिमतमाशु त्वं ब्रूहि प्राप्स्यसि राघव ।
सर्व्वं एव पुनर्येन भेत्स्यन्ति × × साधयः ।
इत्युक्तवत्य × × × रघुवंशवन्तु
दारभ्यवाक्यमुचितार्थविशालमर्थं ।

मत्याज खेदमभिमर्जति वारिवाचे
सर्वौ कथां समुमिताभिमतार्थसिद्धिः ।
इति वाल्मीकीये मोक्षोपाये वैराग्यप्रकरणे वैराग्योत्पत्तिप्रतिपादको नाम
प्रथमः सर्गः ॥ इत्यादि ।

End. यभूतुके मत्वापेषु मिवरेषु मथोभ्रतां ।
यवरो वात्मजाः सिंहाः किं तानपि न मोक्षयि ॥

Colophon. ( अत-परं खण्डितं ) ।

विषयः । इति मोक्षोपाये वैराग्यप्रकरणे वैराग्योत्पत्तिप्रतिपादनं । अमरोपप्रकाशनं ।
इति मोक्षोपाये मुमुक्षुव्यवहारप्रकरणं । इति मोक्षोपाये उत्पत्तिप्रकरणार्थनिर्देशः । इति मोक्षोपाये
वैराग्यप्रकरणं । इति मोक्षोपाये उत्पत्तिप्रकरणे मोक्षोपाख्यानं । इति मोक्षोपाये सूच्युपाख्यानं ।
इति मोक्षोपाये वाल्मीकीये उत्पत्तिप्रकरणं । इति स्थितिप्रकरणे भीमाद्युपाख्यानं । इति वाल्मी-
कीये मोक्षोपाये कथमाथाः । इति , वाल्मीकीये मोक्षोपाये × × × × प्रकरणे
जनकोपाख्यानं । ( अतःपरं खण्डितम् ) ।

---

No. 239. यजमानपत्न्यन्यतरासन्निधाने दर्शपौर्णमासप्रयोगः By वैद्यनाथ-मिश्र . Substance, country-made paper, 10 x 4½ inches. Folia, 5. Lines, 9 on a page. Extent, 90 çlokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City. Paṇḍit Vāmanācārya. Appearance, old. Prose. Correct.

Beginning. श्रीगणेशाय नमः ॥
नित्यनैमित्तिके यावत्कर्म न्यायमनुस्मरन् ।
वैद्यनाथः प्रतनुते यज्ञादौ नामभावनः ॥

End. वाधमानमार्त्विज्यं कुर्वीत इति वचनात् पूर्वमाध्वर्यवं पश्चाद् याजमाना-
दिकं, यत्र कर्मणां सन्निपातस्तत्र यथासामर्थ्यं, अन्यो विशेष एकाध्वर्यु-
प्रयोगादुह्येय इति ।

Colophon. इति वैद्यनाथमिश्रोन्नीतन्यायप्राप्तो यजमानपत्न्यन्यतरासन्निधाने दर्शपौर्ण-
मासप्रयोगः ।

विषयः । उभयोर्मध्ये अन्यतरस्याभावे दर्शादिविधि-कथनम् ।

---

**No. 240.** यमकभारतम् By आनन्दतीर्थ। Substance, country-made paper, 12 × 4 inches. Folia, 5. Lines, 11 on a page. Extent, 120 çlokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City. Paṇḍit Vāmanācārya. Appearance, old. Verse. Correct.

**Beginning.** श्रीवेदव्यासाय नमः।

ध्यायेत्तं परमानन्दं यस्मायापत्तिमयदपरमानन्दं
उच्छ्रितपरमानन्दं पत्याश्चाश्रमः सदैव परमानन्दम्। ?

**End.** इति नारायणनामा यकतीर्थसुपूजितः
सुरायणनामा पूर्णगुणैरधिकपूर्णः।
ज्ञानोपसुक्तिभिः स्वधिकपूर्णः।

**Colophon.** इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं यमकभारतं।

विषयः। माध्वमते श्रीकृष्णस्तुतिः॥

---

**No. 241.** यात्राप्रयोगतत्त्वम्। By हरिशङ्कर. Substance, country-made paper, 14 × $2\frac{1}{2}$ inches. Folia, 10. Lines, 5 on a page. Extent, 300 çlokas. Character, Bengali. Date ? Place of deposit, Dinājpura, Babu Giriśacandra Cakravartti, Pleader. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

नत्वा कृष्णपदद्वन्द्वं ब्रह्मादिसुरवन्दितं।
यात्राप्रयोगतत्त्वञ्च वक्ति श्रीहरिशङ्करः॥
प्रमाणं तत्र यात्रायां पुराणेषु प्रतिष्ठितम्।

**End.** यात्राकारणभूतस्य पुरुषस्य च भूपतेः।
दुष्टान् परांश्च विज्ञाय पश्चाच्छान्तिं समारभेत्॥

**Colophon.** इति स्कन्दपुराणे जैमिनिऋषिसंवादे पुरुषोत्तममाहात्म्ये पञ्चविंशत्यध्याये-रथोत्पत्तिनदुत्थानशान्तिकथनम्॥ *॥ इति यात्राप्रमाणं॥

विषयः। नानापुराणवचनप्रमाणेन भगवतो रथयात्रादि-प्रयोगकथनम्॥

---

**No. 242.** योगशास्त्रम् . Substance, country-made paper, 12 × 4 inches. Folia, 12. Lines, 13 on a page. Extent, 300 çlokas. Character, Nâgara. Date ? Place of deposit, Benares City. Dikmaṇḍalâcâryya Mahârâja Bâlacandra Sûri. Appearance, old. Verse: Correct.

**Beginning.** नमो दुर्व्वाररागादिवैरिवारनिवारिणे ।
अर्हते योगनाथाय महावीराय तायिने ।
पन्नगे च सुरेन्द्रे च कौशिके पादसंस्पृशि ।
निर्विशेषमनस्काय श्रीवीरस्वामिने नमः ॥

**End.** मान्ते गुरुर्न योगिनम् परमेष्ठिस्तुतिं परम् ।
किंधर्मः किंकुलाचारि किंगतोऽस्मीति च स्मरन् ।

**Colophon.** ( असम्पूर्णोयम् । )

विषयः । जैनसत्योमवचनम् ।

---

**No. 243.** रकारादिरामसहस्रनामस्तोत्रम् (ब्रह्मयामलीयम्). Substance, country-made paper, 10 × $3\frac{1}{2}$ inches. Folia, 11. Lines, 10 on a page. Extent, 300 çlokas. Character, Bengali. Date S K. 1757. Place of deposit, Zilla Midnapur, Post Garvetâ, Grâm Khunverâ. Late Paṇḍit Râmatâraṇa S'iromaṇi. Appearance, fresh. Verse. Correct.

**Beginning.** श्रीमते रामानुजाय नमः ।

श्रीदेव्युवाच ।

देवदेव महादेव भक्तानुग्रहकारक ।
श्रुताः श्रुता मया पूर्व्वं मन्त्राणां मतकोटयः ।
तन्त्राणि तन्त्रजातानि सरहस्यानि यानि च ।
तानि तानि महासिद्धिकरिणानि प्रभाणि च ॥
× × × × × × × ।

श्रीदेव्युवाच ।

प्राणनाथ शिव प्रभो करुणानिधिशङ्कर ।
श्रीरामनामजिज्ञासा जायते परमेश्वर ।
रहस्यं रामचन्द्रस्य रकाराक्षरपूर्व्वकं ।
नामसाहस्रकं ब्रूहि यद्यहं तव वल्लभा । इत्यादि ।

End. श्रीरामचन्द्रः श्रितपारिजातः समस्तकल्याणगुणाभिरामः ।
सीतामुखाम्भोरुहचञ्चरीको निरन्तरं मङ्गलमातनोतु ॥
नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागं ।
पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ॥
श्रीहरिः ॐ हरिः ॐ हरिः रां रां हरिः क्लीं क्लीं श्रीं स्वाहा ।

Colophon. इति श्रीब्रह्मयामले शुद्धिप्रसंवादे उमामहेश्वरसंवादे रकारादिसहस्रनाम-स्तोत्रं सम्पूर्णं ॥ ॐ तत्सत् । लिपिरियं श्रीरामनारायणदेवशर्मणः । शकाब्दाः १७४० । ४ । १२ ।

विषयः । श्रीरामस्य रकारादिसहस्रनामकथनम् ॥

---

No. 244. रसमञ्जरी By शालिनाथमुनि. Substance, country-made paper, 6 × 13 inches. Folia, 17. Lines, 18 on page. Extent, 500 çlokas. Character, Nāgari. Date Samvat 1733. Place of deposit, Ṭikāri, Baith-bigha, Dist. Gayā, Paṇḍit Mahāvīraprasād Misra. Appearance, old. Verse. Correct.

Beginning. श्री ग णे श य न मः ॥ ?
विविधैव समाख्यातः सर्वशास्त्रेषु दुर्लभः ।
तथापि कथ्यते सम्यक्प्रकारैरभिधानकम् ॥
वैद्यानां प्रत्ययार्थं तद्वैदनभिधीयते ।
रसः सूतो रसेन्द्रश्च पारदः शिववीर्यकः ॥
शम्भुवीर्यं रसनाथ नामान्येतानि शास्त्रवित् । इत्यादि ।

End. यत्नं तस्य यथा यत्र क्रियते तत् सुबोधतः ॥

Colophon. इति श्रीपरादसंकशालनाथश्रीशालिनाथमुनिविरचिते रसमञ्जर्यां विषशोधनो नाम अष्टविंशतिः पटलः ।
अथातः संप्रवक्ष्यामि तुत्थसंस्कारमुत्तमं
आदौ तुत्थं समादाय × × × ×
यामद्वयात् समुद्धृत्य शुद्धिमायाति निश्चितं
कुष्ठयत्नं यथा यत्र क्रियते तत् सुबोधतः ॥
इदं कुष्ठयत्नं । * । इ श्री रा मे क ल ध स ना न्द मि विचि र सं के न श्रा मा ना विं ति ड लः २० ॥ शुभमस्तु संवत् १७३३ ।

विषयः। १ पटले रसपर्य्यायकथनपूर्व्वकरससंस्कारकथनम्। २, सूतरसधातुसुवर्णकथनम्। ३। ४ चन्द्रसूर्य्यासितायाग्निसंवरपर्पीसकयन्त्रादिकथनम्। ५ रसजारणादिकथनम्। ६ रसशोधनादिकथनम्। ७। ८ रससारणादिकथनम्। ९ रसजारणबन्धनादिकथनम्। १०। ११. धातुशोधनादिकथनम्। १२ रसशोधनमारणकथनम्। त्रयोदशादष्टादशपटलपर्य्यन्तं खण्डितं। १९ विषशोधनकथनम्। २० तुत्थसंस्कारकथनम्।

---

**No. 245.** रसकर्म्ममञ्जरी By राजारामतर्कवागीश. Substance, country-made paper, 13×4 inches. Folia, 27. Lines, 6 on a page Extent, 650 slokas. Character, Bengali. Date ? Place of deposit, Balihār, Dist Rajsahi, Paṇḍit Kālicandra Bhaṭṭacāryya. Appearance, tolerable. Verse and Prose. Generally correct.

**Beginning.** प्रथमपत्रं नास्ति द्वितीयपत्रप्रारम्भवाक्यम्।
षट्कर्म्मदेवताः प्रोक्ताः कर्म्मादौ ताः प्रपूजयेत्।
वाणी भद्रकाली। इत्यादि।

**End.** शिरो मुञ्च २ हृदयं मुञ्च २ उदरं मुञ्च २ कटिं मुञ्च २ उरुं मुञ्च २ गात्राणि मुञ्च २ ... ॐ ह्रूँ ह्रूँ ह्रूँ फट् अमुकस्य सर्व्वज्वरं नाशय स्वाहा। इति० मन्त्रेण पत्रिकां लेखयित्वा कुमारीकल्पितसूत्रेण वेष्टयित्वा ज्वरितः शिरसि बन्धयेत् *।

**Colophon.** इति श्रीराजारामतर्कवागीशभट्टाचार्य्यविरचितायां रसकर्म्ममञ्जर्य्यां शान्तिविधिकथनं नाम द्वितीयः पटलः। *।

अतःपरं खण्डितं।

विषयः। १ मारणोच्चाटनादिकर्म्मणां कालादिनियमेन सामान्यविधिकथनम्। २ पटले स्तम्भनादिप्रयोगनिरूपणशान्तिविधिकथनम्॥

---

**No. 246.** रसरत्नमाला, By नरसिंह कविराज. Substance, country-made paper, 6×13 inches. Folia, 70. Lines, 18 on a page. Extent, 1400 slokas. Character, Nāgari. Date Saṃvat 1732. Place of deposit Tikāri, Baithbighā, District Gayā. Paṇḍit Mahāvīrprasād Misra. Appearance, old. Verse. Generally correct.

**Beginning.** श्री गणेशाय नमः ॥

हेरम्बमीशं कारणमाद्यमेकं ब्रह्ममयं ।

चादिमनादिं शाश्वतमशाश्वतं गोपमच्युतं वन्दे ॥

कमलकरजतसुवर्णवैदूर्यहीरे-

र्मरकतरसरत्नैः पद्मरागेन्द्रमुख्यैः ।

विशदगुणकरम्यैर्गुम्फितारत्नमाला

विबुधनिवहकण्ठ्या रामकृष्णप्रसादात् ॥

अथातः सम्प्रवक्ष्यामि रसलोहादिसंस्कृतिं ।

यद्विज्ञानेन भिषजो न मुह्यन्ति चिकित्सिते ॥

**End.** काश्मिं चिरस्थिरं देवं सप्तावनयमाचात् सर्व्वतो पम्ति किं बहुना ।

+ + + । सुचिरचिन्तशास्त्रपारं गत्वा सारं ततः समुद्धृत्य निबन्ध-

बाल्यवानासुपशमये × को × षड्कम्म्या रत्यसतसारलोकं ॥

मन्त्रार्थकान् विनिर्माय्य नरसिंहेन सद्गुणैः ।

गूढवाक्यविषं त्यक्त्वा रत्नमाला समुद्धृता ॥

लोहमणौषधघटिता मालेयं रत्नपूरिता नरसिंः ।

× × × × × × ॥

यद्यपीयं न हि भवेत् पुराणभिषजः प्रिया ।

तथापि नव्यवैद्यानामानुकूल्यं करिष्यति ॥ * ॥

**Colophon.** इति दाक्षिणात्यवैदिकमहोपाध्यायश्रीकृष्णभट्टात्मजरामकृष्णभट्ट-परिचारक श्रीनरसिंहकविराजविरचितारसरत्नमाला समाप्ता ।

शुभमस्तु संवत् १७११ ॥

विषयः । रसशोधनादिकथनम् । रसकर्पूर-रससिन्दूरादि-कथनम् । रसबन्धनादि-कथनम् । रसमारणादि-कथनम् । अभ्रमारणादिकथनम् । स्वर्णादिमारणकथनम् । रत्नगिरि-ज्वरपञ्चाननादिरसकथनम् । प्रतापलङ्केश्वररसादिकथनम् । महोदधिकनकसुन्दरादिसकल-रसकथनम् । पञ्चामृतपर्पटीकथनम् । विजयपर्पटीकथनम् । वह्निसूतलोहादिकथनम् । पञ्चामृतवटीकथनम् । अमृतादिवटीकथनम् । राजयक्ष्मादिचिकित्साकथनम् । कासादि-चिकित्साकथनम् । स्वरभेदचिकित्साकथनम् । मूर्च्छादिचिकित्साकथनम् । वातव्याधिचिकित्सा । आमवातचिकित्सानिरूपणम् । उदावर्तचिकित्सा । गुल्मादिचिकित्सा । शोथादिचिकित्सा-निरूपणम् । कुष्ठादिचिकित्साकथनम् । शीतरोगादिचिकित्सा । साध्यासाध्यपरिमाणविधिकथनम् । आम्रपाक-पुष्पादिविविधकथनम् । बहुतसारलोहादिकथनम् ॥

---

**No. 247.** सारमञ्जरी (राघवपाण्डवीय टीका). By जितामित्र. Substance, country-made paper, 12 × 2½ inches. Folia, 44. Lines, 7 on a page. Extent, 1500 slokas. Character, Bengali. Date S.K. 1749. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Bhaṭṭagrām, Paṇḍit Rāmhṛdaya Bhaṭṭāchāryya. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीश्रीरामः ।

विघ्नविध्वंसमूरं तमकन्दमानन्दसंततेः ।
गुरोरेवरचाम्भोजमभिवाद्य यथि श्रमः ॥
टीकायां विततां व्याख्यां दृष्ट्वालोच्य समासतः ।
जितामित्रेण धीरेण क्रियते सारमञ्जरी ॥
कर्त्तव्यविघ्नध्वान्तयेऽभिमतदेवतां नमस्कुर्वन् शिष्यशिक्षयैव प्रथमं मङ्गलं प्रथमताह । श्रेति । इत्यादि ।

**End.** अतीयां नागरायां दिव्यसंजयं प्रख्यापनं पक्षे कायविवर्णनं नीचेभूवात् उपाख्यायरूपात् कवेः वाल्मीकेः कृष्णभुवोऽत्र व्यासस्य × × × × × पक्षे कवेरिति कृष्णभुवो विशेषणं । श्रिया । स रामः भरतसमभिव्या श्रिया युक्तः पक्षे × × × × नन्दाघकारविन्नुः राम्रोच्चेयं ।

**Colophon.** इति श्रीराघवपाण्डवीयटीकायां सारमञ्जर्यां श्रीजितामित्र-कृतायां त्रयो-दशः सर्गः समाप्तः । शकाब्दाः १७४९ ।

काले कथं समवकोरकपुष्पमेतद्-
यत्नाश्रितं समधुपं न तथं प्रयुक्तं ।
सिन्दूरपूरकिरणे सति भानुदेवे
मद्रे समीपमुपयान्त्रमयूखमप्रम् ॥
काकः कृष्णः पिकः कृष्णो न भेदः पिककाकयोः ।
वसन्ते पुनरायाते काकः काकः पिकः पिकः ॥
श्रीश्रीसीतारामाभ्यां नमोनमः ।

विषयः । राघवपाण्डवीयकाव्यस्य व्याख्यानम् ।

---

**No. 248.** राजधर्मकौस्तुभः. By अनन्तदेव. Substance, country-made paper, 10 × 4 inches. Folia, 29, Lines, 11 on a page. Extent, 720 slokas. Character, Nāgari. Date ? Place of deposit, Bibihāṭi, Benares City. Paṇḍit Vāmanācārya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ॥

अपूर्व्विषदधिगतं रूपं गुणयो ममसा भजन्त्यरूपं यत् ।
कुरुध्व ष्टतोत्कटको × विजय × मयो जयति ।
यशःकर्पूरेण सर्व्वाशाः परिपूरयन्,
लज्जाजलनिधौ सर्व्वान् योचिपत्नृपतीन् परान् ॥

**End.** अथ यजमानो मयादिदक्षिणा । आचार्य्याय अन्येभ्यश्च भूयसीं दक्षिणां दत्वा यथाशक्ति ब्राह्मणान् भोजयित्वा परमेश्वरार्पणं कुर्य्यात् । इति संक्षेपप्रचण्डीविधिः ।

**Colophon.** इति श्रीमन्महाराजाधिराज-श्रीवाजबाहादुर-कपवराजाप्रहतेमापदेवसुता-मन्तदेवविदुषा कृते राजधर्मकौस्तुभे पूर्णपद्धतिगोचरद्वितीयदीधितेः पूर्व्वार्द्धं समाप्तम् ।

विषयः । जलाशयोत्सर्गकथनम् ।

---

No. 249. राधाष्टमीपूजाविधिः (ब्रह्मवैवर्त्तपुराणीयः). Substance, country-made paper, 15×3½ inches. Folia, 3. Lines, 7 on a page. Extent, 750 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Candrakoṇā, Ayodhyā, Raghunātha-vāṭi, Babu Cakrapāni Rāya. Appearance, old. Generally correct.

**Beginning.** श्रीनारायणाय नमः ।

अथ राधाष्टमीपूजाविधिः ।

तत्रादौ स्वस्तिवाचनपूर्व्वकं संकल्पं कुर्य्यात् । श्रीविष्णुरों तत्सदद्य भाद्रमासि शुक्ले पक्षेऽष्टम्यान्तिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा श्रीराधाकृष्णपादान् अर्चयिष्ये इति सङ्कल्प्य यज्ञाप्रत इति पठेत् ॥ इत्यादि ।

**End.** प्रथमावरणे देवकन्या, द्वितीयद्वारे किङ्किनी, तृतीये सखी, चतुर्थे कामधेनुः, पञ्चमे मन्दारवृक्षमूले रत्नसिंहासने प्रद्युम्नः, × × × सप्तमे मुनिगणसहितः कृष्णवर्णो विष्णुः, दक्षिणे चक्रकुण्डः । इति सप्तावरणं समाप्तम् ।

**Colophon.** इति ब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे श्रीराधिकापूजापद्धतिः समाप्ता ।

विषयः । श्रीराधायाः पूजाविधानकथनम् ।

---

**No. 250.** राधाष्टमीव्रतकथा (भविष्योत्तरीया). Substance, country-made paper, 15 × 3 inches. Folia, 5. Lines, 7 on a page. Extent, 140 ślokas. Character, Bengali. Date S.K. 1708. Place of deposit, Zilla Midnapur, Post Candrakonā, Ayodhyā Raghunātha-vāṭi, Babu Cakrapāṇi Rāya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो राधायै ॥

श्रीशौनक उवाच ।

आराधनानां सर्व्वेषां विष्णोराराधनं परं ।
ततोऽप्यधिकमस्त्यन्याराधनं चेद्वदस्व मे ॥

श्रीसूत उवाच ।

शृणुध्वं मुनयः सर्व्वे व्रतमेतत् सुगोपितं ।
कृष्णनारदसंवादं यच्छ्रुत्वा भक्तिमान् भवेत् ॥

श्रीनारद उवाच ।

श्रुताः सर्व्वावतारास्ते कृष्णविष्णो सनातन ।
राधिकायाः महादेव्याः प्रादुर्भावं वदस्व मे ॥ इत्यादि ।

**End.** सूत उवाच ।

श्रुत्वैतत् कृष्णवचनं नारदो मुनिसत्तमः ।
चकारैतद्व्रतं भक्त्या वैष्णवानामपि भिक्षया ॥
अथ दामोदरं स्तुत्वा राधया सहितं मुदा ।
प्रणम्य दण्डवद्भूमौ ययौ × × × × मुनिः ॥

**Colophon.** इति श्रीभविष्योत्तरे श्रीकृष्णनारदसंवादे श्रीराधाष्टमीव्रतकथा समाप्ता ।
ॐ नमो राधिकायै । शक० १७०८ ।

विषयः । श्रीराधाष्टमीव्रतकरणे फलकथनम् । श्रीराधाया जन्मादिविवरणकथनञ्च ।

---

**No. 251.** राधास्तोत्रम् (ऊर्द्ध्वाम्नायतन्त्रोक्तम्). Substance, country-made paper, 16 × 4 inches. Folia, 1. Lines, 8 on a page. Extent, 16 ślokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Telivāni, Paṇḍit Nilkamal Gosvāmi. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ श्रीराधिकायै नमः ।
अथ राधास्तोत्रम् ।
शिव उवाच ।
ॐ नमस्ते परमेशानि ब्रह्मरूपसनातनि ।
ब्रह्मविष्णुशिवादीनां प्राणेशि परमेश्वरि ।
राधा करोतु कुशलं दारादिषु धनादिषु ।
यस्याः पादसरोजस्य रेणु मौलिमधुव्रताः ।
अभीष्टमधुधाराभिस्तृप्यन्त्येव न संशयः ॥
इन्द्रादिदिविषद्वृन्दवन्दितं पादपङ्कजं ।
यस्याः कमलसूत्रेण निर्मितं चामरं तथा ।
तां नमामि हरेः कान्तां स्मेराननसरोरुहाम् ॥ इत्यादि ।

**End.** एतत् स्तोत्रं पठेद् यस्तु सर्व्वपापप्रणाशनं ।
तस्य मुक्तिः करगता सत्यं सत्यं वरानने ॥
महार्णवे महारण्ये सिंहव्याघ्रभयानके ।
वारमेकं पठेद् यस्तु तस्य भीतिर्न जायते ॥
× × × × × × ।
पुत्रवृद्धिकरं स्तोत्रं धनवृद्धिकरं तथा ।
न प्रकाश्यमिदं देवि न देयं यस्य कस्यचित् ॥

**Colophon.** इति ऊर्द्ध्वाम्नाये महातन्त्रराजे परमरहस्ये शिवशिवासंवादे श्रीराधास्तोत्रं समाप्तं ॥

विषयः । श्रीराधायाः स्तुतिकथनं तस्य फलकथनञ्च ।

---

No. 252. राधिकाजन्मरहस्यम् ( ब्रह्मवैवर्त्तीयम् ). Substance, country-made paper, 15 × 3½ inches. Folia, 3. Lines, 7 on a page. Extent, 80 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Candrakonā, Ayodhyā Raghunātha-vāṭi. Babu Cakrapāṇi Rāya. Appearance, old. Verse. Generally correct.

**Beginning.** अथ कथा ।
शौनक उवाच ।
व्रतेन केन तपसा सर्व्वकामार्थसाधनं ।
गुह्याद्गुह्यतरं नाम राधिकाया व्रतं × × × ॥

सर्व्वसन्त्वेषु सर्व्वेषु सोपानीयं महाप्रभौ ।
तत् सर्व्वं श्रोतुमिच्छामि कथयस्व मयि प्रभो ॥ इत्यादि ।

**End.** पूजयेद्गन्धपुष्पाभ्यां धूपदीपविधानतः ।
मिष्टान्नं क्षीर + + + नैवेद्यं विविधानि च ॥
मधुपर्काचमनं वस्त्रालङ्कारभोजनैः ।
+ + + + + सर्व्वं प्रथिया कामचारतः ॥

**Colophon.** इति ब्रह्मवैवर्त्ते महापुराणे श्रीराधिकाया जन्मरहस्यं सम्पूर्णं ।

ॐ गुरवे नमः ।
शाके मुनिश्रीमयुगेन्दुगण्ये
पुण्ये तथा फाल्गुणपौर्णमास्यां ।
त्रैलोक्यभाग्योदयपुण्यहेतुः
प्रभुः शचीनन्दन आविरासीत् ॥

विषयः । राधाष्टमीव्रतप्रसङ्गे श्रीराधाया जन्मादिविवरणकथनं ॥

---

**No. 253.** श्रीरामसहस्रनामस्तोत्रं (रुद्रयामलीयं) Substance, country-made paper, 9×4 inches. Folia, 17. Lines, 7 on a page. Extent, 225 ślokas. Character, Nāgara. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunvorā, Babu Vaikunṭhanāth Cakravartī. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमः श्रीमते रामानुजाय ।

कैलासशिखरे रम्ये नानाधातुविचित्रिते ।
नानाद्रुमसमाकीर्णे नानापक्षिगणावृते ॥
नानापुष्पलतागुल्मवेष्टिते प्रमथावृते ।
देवदानवगन्धर्व्वकिन्नरैरुपशोभिते ॥
मन्दमारुतसंवीते पार्व्वतीपरमेश्वरौ ।
उपविश्य कथां चक्रे शङ्करेण मुदान्वितौ ॥
भक्त्या शम्भुं प्रणम्याथ पार्व्वती परिपृच्छति ॥

पार्व्वत्युवाच ।

देवदेव महेशान सर्व्वागमविशारद ।

समेत रक्षयं नाथ नाहि मां दुःखसागरात् ।
नाम्नां सहस्रं रामस्य ब्रूहि मे प्रमथाधिप ॥ इत्यादि ।

End. रामेति रामचन्द्रेति रामभद्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति ॥

Colophon. इति श्रीब्रह्मयामले हरगौरीसंवादे श्रीरामसहस्रनामस्तोत्रं सम्पूर्णं ॥

विषयः । श्रीरामस्य सहस्रनामकथनं ॥

---

**No. 254. रामाण्डारे नवमःप्रश्नः.** Substance, country-made paper, 12×5 inches. Folia, 80. Lines, 11 on a page. Extent, 1930 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, new. Prose. Correct.

Beginning. उक्ता हविर्यज्ञाः, अथ हविर्यज्ञा उक्ताः पूर्व्वं सौत्रामन्यपि पशुबन्धत्वात् उक्तप्रायेति हविर्यज्ञा इत्यविशेषोक्तिः तेषु प्रायश्चित्तमवश्यमपि दैवात् कालेऽपि इत्यादि ।

End. सर्व्वेषां सप्रयोग आचरणीय एव उपदेशस्त्वेकैकया आहुत्यैकैकस्मिन्नग्नौ पूर्व्ववद्धोमं कुर्य्यादिति द्विरुक्तिपाठः प्रश्नपरिसमाप्त्यर्थः .

Colophon. समाप्तः प्रश्नः.

विषयः । आपस्तम्बप्रायश्चित्तसूत्रभाष्यवृत्तिः ।

---

**No. 255. रामानुजमतखण्डनम्.** Substance, country-made paper, 12×5 inches. Folia, 8. Lines, 11 on a page. Extent, 240 slokas. Character, Nāgara. Date ? Place of deposit, Bahuvallbaha Cattarji, Pātāleśvar, Benares city. Appearance, new. Prose and verse. Correct.

Beginning. जयति श्रीतधर्मार्कः स्मार्त्तधर्मावबोधकः ।
सत्पुराणैकचन्द्रमाः पाषण्डध्वान्तनाशकः ॥

इदानीं बहवो मुग्धा जना रामानुजीयानां दम्भमत्याचारं चाविलोक्य तैर्विप्रलब्धाः सन्तः शास्त्रसम्मतमपि स्वकुलधर्ममपहाय तन्मार्गे प्रविशन्ति स च मार्गः श्रुतिस्मृत्यादिसूत्रविधुरोऽत्यन्तनीचजात्युद्भूतपुरुष-प्रवर्त्तित इति तत्र प्रविष्टा वर्णाश्रमधर्माधिकारच्युता भवन्तीत्यादि ॥

**End.** तदा द्विजैः सर्व्वजगद्धिताथं
सदर्सरत्नाकरपद्धमेतत्, ।
प्रकाशितं तस्य विलोकनेन
रामानुजीयाश्चकिता बभूवुः ॥
मिथ्यन्तराधोवदनाः स्वकीयं
विशाय यानद्वमतं विहद्धं
स्वीकृत्य सर्व्वं द्विजभाषितं ततो
गताखिलद्वन्द्वादय इत्यमेतत् ॥

**Colophon.** श्रीरामानुजीय-मत-खण्डनम् ।

विषयः । रामानुजाचार्य्य-प्रवर्त्तितमतखण्डनम् ।

---

**No. 256.** यज्ञपद्धतिः. By त्रिम्बनाथ देव. Substance, country-made paper, 12×5 inches. Folia, 25. Lines, 11 on a page. Extent, 550 ślokas. Character-Nāgara. Date ? Place of deposit, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीमद्गणपतये नमः ।
जयति जगति रामो जानकीजानिरेको
दशरथकुलदीपः सच्चिदानन्दरूपः
दशमुखमुखराजूच्छेदविच्छेददक्षो
भृगुकुलतिलको × × ज्ञानचानिप्रवीणः ।

**End.** आमन्तरं यजमानेन इ + × × यज्ञा × × × ति मन्त्रेण देवदक्षिणहस्ते जपनिवेदनं ततः पीठदेवताविसर्जनादिकं कुर्य्यात् ।

**Colophon.** इति श्रीमन्माध्यन्दिनीयमाद्देवनमयरामदेवानुजविश्वनाथदेवविरचितायां यज्ञपद्धतौ जापकृत्यं यज्ञविधानाख्यं द्वितीयप्रकरणं समाप्तम् ।

विषयः । यज्ञानुष्ठानम् ।

---

**No. 257.** यज्ञाख्यानं. Substance, country-made paper, 11×3 inches. Folia, 3. Lines, 5 on a page. Extent, 30 ślokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgīśa. Appearance, old. Verse. Generally correct.

Beginning. ॐ परमदेवतायै नमः ।

ईश्वर उवाच ।

रुद्राक्षस्य फलं वक्ष्ये त्रिषु लोकेषु विश्रुतं ।
लक्षं सन्दर्शनात् पुण्यं स्पर्शनात् कोटिरुच्यते ॥
दशकोटिसमं पुण्यं धारणाल्लभते नरः ।
दशकोटिसहस्राणि दशकोटिशतानि च ॥
कपिला तु लभेत् पुण्यं नात्र कार्य्या विचारणा ॥
हस्ते बाह्वो तथा कण्ठे मूर्द्ध्नि रुद्राक्षधारणात् ।
अवध्यः सर्व्वभूतानां रुद्रवद्‌ विचरेद्‌ भुवि ॥
देवासुराणां सर्व्वेषां वन्दनीयो यथा शिवः ।
उच्छिष्टो वा विकर्म्मस्थो युक्तो वा सर्व्वपातकैः ॥
मुच्यते सर्व्वपापेभ्यो रुद्राक्षधारणान्नरः ॥
रुद्राक्षकण्ठमाश्रित्य श्वापि वा म्रियते यदि ।
सोयं रुद्रत्वमाप्नोति किं पुनर्म्मानवादयः ॥ इत्यादि ।

End. अतःपरं सुखाधिक्यं रुद्राक्षं लभते यदि ।
फलमेतद्‌दशं देवि लभते नात्र संशयः ॥
विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः ।
स याति × × × × ×
अतः परं खण्डितं ) ॥

Colophon. — — — — —

विषयः । रुद्राक्षधारणेन फलादि कथनम् ।

---

No. 258. लक्षणमञ्जरी. By गङ्गेश. Substance, country-made paper, 14×3 inches. Folia, 4. Lines, 6 on a page. Extent, 95 ślokas. Character, Bengali. Date ? Place of deposit, Dinājpur, Babu Girishchandra Cakravarti. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमो गणेशाय ॥

नत्वा गुरुपदाम्भोजं परं ब्रह्मस्वरूपकं ।
क्रियते लक्षणमञ्जरी गङ्गेशेन च धीमता ॥

विषक्विनविषयाद्वयप्रेमत्वं प्रारिप्रेमत्वं । क्रियारम्भकत्वादिविशिष्टचरम-कालपर्य्यन्तावच्छेदकालावच्छिन्नत्वं वर्त्तमानत्वं ॥

**End.** पदार्थानां साधने प्रक्रियायोग्यता । स्वरूपाविच्छिन्नतीवारितत्वं षष्ठिरिव-मत्वं । वाक्यविरचय योग्यता । समाप्तश्चायं ग्रन्थः ॥ * ॥

**Colophon.** — — — — — —

विषयः । समवायादिसम्बन्धनिरूपणं । धातुविभक्त्यादिकथनं । कारणाधिकरणादिकथनं । आकाङ्क्षायोग्यतादिनिरूपणं ॥

---

**No. 259.** लक्षणातत्त्वं. By गङ्गेश. Substance, country-made paper, 15×3 inches. Folia, 3. Lines, 6 on a page. Extent, 60 ślokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mohār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgīśa. Appearance, fresh. Prose. Generally incorrect.

**Beginning.** ॐ नमो गणेशाय । ॐ सरस्वत्यै नमः ।
नत्वा गुरुपदद्वन्द्वं परं ब्रह्मस्वरूपकं ।
क्रियते लक्षणातत्त्वं गङ्गेशेन सुधीमता ॥

---

**No. 260.** लक्षहोमकारिका. By नारायणभट्ट. Substance, country-made paper, 8×3 inches. Folia 2. Lines, 11 on a page. Extent, 34 ślokas. Character, Nāgara. Date Saṃvat 1783. Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
अथ लक्षहोम कारिका
वैश्वसंगं पुरा × × × हत्वाचार्य्यसद्त्विजः ।
कुम्भीर × सचार्य्यर्त्विक् भद्रं मन्त्रं प्र × × द्विशेत् ॥

**Colophon.** सर्व्वकर्म्मसमाप्तिं च विप्राशीर्व्वचनानि च,
आयुष्मान् भे प्रथमखे चक्रादौ नामुखमखपे ॥
संक्षेपस्वारङ्गाख्येय भट्टनारायणेन च ॥

End. इति भट्टोपनामककमारायणभट्टकृतः संक्षेपतो प्रयोगः समाप्तः संवत् १७८१.

विषयः । प्रयोगविधिकथनम्.

---

No. 261. लघुसंक्षेपशारीरककूतूहलम्. By महादेव. Substance, country-made paper, 12×4 inches. Folia, 23. Lines, 9 on a page. Extent, 460 slokas Character, Nāgara. Date Saṃvat 1766. Place of deposit, Benares City, Paṇḍit Govinda Bhaṭṭa. Appearance, old. Verse. Incorrect.

Beginning. एवं समन्वयश्रोक्त्या वाक्यतो ब्रह्मगोचरः ।
ज्ञातोपि बोधमानेन भेदकेन निपीयते ॥
मज्ञात्यत्राव्यय जिज्ञासारम्भीत्यादि वाक्यतः ।
ज्ञाताबुद्धिर्यथा वाक्याऽद्वैतबुद्धिस्तथात्मनि ॥
प्रत्यक्षो मम संसारो वाक्यमात्र विमुक्ततां ।
एवं वाक्यापरिज्ञाने दुर्निवाराद्यवाध्यता ॥
मम कर्तृत्वभोक्तृत्वे चात्र कर्मविधिर्मतान् ।
वेदान्तानिर्विशेषत्वमाद्यः सत्प्रतिपक्षवत् ॥

End. धनेन बन्धुभि दारैः किन्ते यत्नं मरिष्यसि ।
गुहां प्रविष्टमात्मानं विज्ञानीषि ब्रतेःपुरा ॥
धनमूलं दमो दण्डं धर्ममूलं तथाश्रमे ।
ज्ञानमूलं वयोरूपं मोक्षमूलमुपारमः ॥

Colophon. वेदान्तिनामहादेवशर्मणा निर्मितेऽद्भुते,
ऋतीयल्लघुसंक्षेपशारीरककुतूहले ।
संवत् १७६६ पौष शुक्लपक्षो ।

विषयः । ब्रह्मविद्योदयकथनं ।

---

No. 262. "लघुसंग्रहणीटीका". Substance, country-made paper, 13×5 inches. Folia, 5. Lines, 11 on a page. Extent, 175 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dikmaṇḍālācāryya Mahārāja Bālacandrasūri. Appearance, old. Prose. Correct.

**Beginning.** सकलवाचकोपाध्यायेभ्यो नमः ।

प्रणम्य परयाभक्त्या जिनेन्द्रचरणाम्बुजं ।

लघुसंग्रहणीटीकां करिष्येऽहं सुदाक्षरं ॥ इत्यादि ।

**End.** तिस्रो दृष्टयः प्राप्त × × ते कोर्थः षोडशदण्डकेषु तिस्रो दृष्टयो भवन्तीत्यर्थः । द्वयमं दृष्टिद्वारं व्याख्यातमसमुच्चयार्थः ॥'( इतो नास्ति. )

**Colophon.** — — — — — —

विषयः । जैनसिद्धान्तसारलघुसंग्रहणीव्याख्या ।

---

**No. 263.** लोकस्वरूपद्वात्रिंशिका. Substance, country-made paper, 12×4 inches. Folia, 4. Lines, 12 on a page. Extent, 60 çlokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dikmaṇḍalacāryya Mahārāja Bālacandrasūri. Appearance, old. Verse. Correct.

**Beginning.** जिणं दंसणं विनाअं लोयं पुरंतु जम्म मरणे चिं ।

उक्तउ जिणोमम्मभवे मम्म सरूवं किमवि वुच्छं ॥

**End.** इयपरिक्खिय वपिय संवड्डिया

लोगसार सुयलम्भ सूयणम्म किंत्तिय

नच जयह जहा उमयण इच लिंसं ॥

**Colophon.** इति लोकस्वरूप द्वात्रिंशिका ।

विषयः । जैनमते चतुर्दशलोकानां वर्णनम् ।

---

**No. 264.** लोकनालिकावचूर्णिः. Substance, country-made paper, 12×4½ inches. Folia, 7. Lines, 13 on a page. Extent, 160 slokas. Character, Nāgara. Date Saṃvat 1651. Place of deposit, Benares City, Dikmaṇḍalā-cāryya Mahârāja Bālacandrasūri. Appearance, old. Prose. Correct.

**Beginning.** श्रीगुरुभ्योनमः ।

श्रीजिन सम्यक् श्रद्धभावदर्शनं विना जी × × यं चतुर्दशरज्ज्वात्मक-लोकं पूरयन् बहुविधपुद्गलपरावर्त्तं भ्रांत जी × × तस्य लोकस्य स्वरूपं किमपि ब्रुवे ।

End. इच षट्पञ्चाशत्संख्यिकपैः प्रहरै स्थितिः च च व × × नच वर्गीकृतः च × × नव भुजा चर्षेः समचतुरस्रीकृतः। च च क्षोकच तस्य सारखरूपं उपलभ्य ज्ञात्वा तथा यतन इच न भ्रमन्ति इत्यर्थः।

Colophon. इति श्लोकमालिकाटिप्पणी।

विषयः। श्लोकमालिकाव्याख्या।

---

No. 265. वाञ्छाकल्पलतामनुविधानम्. Substance, country-made paper, 12× 6½ inches. Folia, 2. Lines, 16 on a page. Extent, 52 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Govinda Bhatta. Appearance, old. Verse. Correct.

Beginning. मार्कण्डेय उवाच।

भगवन् सर्व्वमन्त्राश्च भवता मे प्रकीर्त्तिताः।
तच विद्या गणेशस्य प्रायाकल्पलता मनुः॥ १॥
सूचितः कृपया दैव संगुप्तो न प्रकाशितः।
इदानीं श्रोतुमिच्छामि सर्व्वलोकहिताय वै॥ २॥

End. यथार्थं साधयेत्कोपि श्रवणं चक्षुमात्मवित्।
किमच बहुनोक्तेन सर्व्वान् कामानवाप्नुयात्॥

Colophon. इति कुमारसंहितायां वाञ्छाकल्पलतामनुविधानं दशमः पटलः।

विषयः। गणेशार्चनविधानं.

---

No. 266. वाञ्छाकल्पलताविधिः. Substance, country-made paper, 10×5 inches. Folia, 5. Lines, 12 on a page. Extent, 125 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Govinda Bhatta. Appearance, new. Prose. Correct.

Beginning. अस्य श्रीमिच्छागणपतिमहामन्त्रस्य दक्षिणामूर्त्तिर्ऋषिरनुष्टुप् छन्दः श्रीमहाविद्यागणपतिर्देवता ऐं बीजं क्लींशक्तिः सौ कीलकं मम चतुर्विधपुरुषार्थसिद्ध्यर्थं वाञ्छाकल्पलतायाः पूर्व्वं षोडशाक्षरिमूलमन्त्रजपे विनियोगः।

**End.** यावत्तेभवे लक्ष्मीः पद्माक्षी जगद्वरं ।
इयाहत्तो शिवादीनां देवानां शक्तिभाग्भवेत्
सुचाहत्तो सार्व्वभौमो दरिद्रोऽपि भवेन्नरः ।
नार्थवादोयवैयय वसिष्ठस्य वचो यथा ॥

**Colophon.** इत्याथर्वणरहस्ये वाञ्छाकल्पलताविधिश्चतुर्थः पर्य्यायः ॥

विषयः । महाविद्यागणपतेः पूजादिविधानं.

---

**No. 267.** वास्तुप्रदीप. Substance, country-made paper, $9 \times 4\frac{1}{2}$ inches. Folia, 21. Lines, 9 on a page. Extent, 400 slokas. Character, Nāgara. Date Saṃvat 1572. Place of deposit, Calcutta, Visvakoṣa office, Babu Nagendranāth Vasu. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

विद्वच्छाब्दिकयज्ञतोक्तिरचनैर्यद्वास्तुविद्यावता
मानन्दाभिगमो भवेन्मुनिमतः सज्ज्योतिषज्ञोचितः ।
तत् सम्प्रत्यपि वासुदेवसुधिया वास्तु प्रदीपाभिधो
ज्योतिर्वेदविदां विधीयत इति प्रत्यक्षदृग्वर्त्मने ॥

**End.** सौम्येऽर्थलाभः शिवगेऽर्थसिद्धि
र्षामि पुंस र्घानतस्तथैव ।
यामेऽथवा यत्र पतत्र्यस्तु
पीड़ाकरोहष्टिवशाद् द्वयोस्तु ॥
यत्नाभिलक्षः सौरिसत पूज्यः प्रयत्नतः ।
स्वेषभात् येन × × देशभात् देशकर्म्मकं ॥
कराद्रिशरैः १५७१ प्रमिते शकाब्दे सिते सिते चन्द्रदिने दशम्यां
वास्तुप्रदीपो रचितः सबुद्ध्या श्रीवासुदेवेन मगद्विजेन ॥ १० ॥

**Colophon.** इति श्रीवासुदेवपण्डितविरचितो वास्तुप्रदीपः समाप्तिमगमत् ॥

विषयः । गृहादिनिर्म्माणविधिकथनं तथा गृहद्वारादीनां फलकथनं ॥

---

**No. 268. वास्तुशान्तिपद्धतिः.** Substance, country-made paper, 8 × 3 inches. Folia, 30. Lines, 10 on a page. Extent, 600 slokas. Character. Nāgara. Date Saṃvat 1834. Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācārya. Appearance, old. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ वास्तुपद्धतिः ।

नत्वा गुरुं गणपतिं वास्तुपूजनपद्धतिः ।

नानानिबन्धानालोक्य यथामतिरिहोच्यते ॥

तत्रादौ वास्तुफलं मात्स्ये ॥

**End.** स्वभावाये मांसवचिरोपि × × × × × × × × × अथ निषिद्धग्रामसूकरादिमांसव्यतिरिक्तानि मांसानि ग्राह्याणि, तदभावे विप्राय माषभक्तम् ।

**Colophon.** इति चक्रियादीनां पौराणवास्तुशान्तिप्रयोगः । संवत् १८३४ ।

विषयः । वास्तूनां शान्तिप्रयोगकथनम् ॥

---

**No. 269. विधिरसायनम्.** Substance, country-made paper, 12 × 5 inches. Folia, 30. Lines, 11 on a page. Extent, 720 slokas. Character, Nāgara. Date ? Place of deposit, Benares City. Govinda Bhaṭṭa, Appearance, old. Prose. Correct.

**Beginning.** उद्धाय योगकलया हृदयाब्जकोषं

धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।

यः प्रस्फुरत्यविरतं परिपूर्णरूपः

स मे समादिशतु शाश्वतिकं मुकुन्दः ॥

अब्धासो सलयं समस्तजगतां यस्येव लीलायितं

यस्मिन्नापतते भवस्थिरमहापापाग्नयः प्राणिनां,

तद्ब्रह्मादिभिरप्यगम्यविभवं विश्वाधिकं शाश्वतं

धाम्नं मस्मरसात्ममूलरसिकं पश्येयमन्तर्दृशां ।

यत् कुमारिलमतानुसारिणा निर्मितं विधिरसायनं मया,

यद्यदल्पमतिस्फुटाशयं तत् सुखावगतये विविच्यते ।

**End.** इति लभ्यते, तदेतत् सर्व्वं दशमे ऐन्द्रवायव × × × प्रवचनादादिनः ( इतो नास्ति ) ।

Colophon. × × × × × × ।

विषयः । कुमारिलभट्टमतानुसारतो मीमांसादर्शनव्याख्या ।

( असम्पूर्णोऽयं ग्रन्थः )

---

**No. 271. बिल्वोपनिषत्.** Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 11 on a page. Extent, 40 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Govinda Bhatta. Appearance, old. Verse. Correct.

**Beginning.** ओम् अथ, वामदेवः परमेश्वरं सृष्टिस्थितिलयकारणमुमापतिं स्वशिरसा प्रणम्येतीवोवाच । अधीहि भगवन् सर्व्वविद्यां सर्व्वरहस्यवरिष्ठां सदा सद्भिः पूज्यमानां निगूढां ।

**End.** ओम् सह नाववतु, सहनौ भुनक्तु । सहवीर्य्यं करवावहै तेजस्विनावधीत-मस्तु माविद्विषावहै । ओम् शान्तिः शान्तिः शान्तिः ।

**Colophon.** इति बिल्वोपनिषत् समाप्ता ।

विषयः । बिल्वेन शिवार्च्चनविधिकथनं ।

---

**No. 272. विवाहवादार्थः ।** Substance, country-made paper, 12 × 3 inches. Folia, 3. Lines, 7 on a page. Extent, 84 slokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Pandit Jagadbandhu Tarkavāgisa. Appearance, fresh. Prose. Generally correct.

**Beginning.** अथ विवाहवादार्थः । वरसंस्कारानुकूलव्यापारो विवाहः । अत्र वरमत्वं स्वावच्छेदकशरीरावच्छिन्नस्वाधिकरणवृत्तिसंस्कारप्रागभावसमानकालीनत्वं तेन न नामकरणादावतिव्याप्तिः । अत्र चान्यदीयसंस्कारमादायासम्भववारणाय स्वाधिकरणवृत्त्यन्तं । अवच्छिन्नान्तनिवेशाच्च जन्मान्तरीयसंस्कारमादाय नाव्याप्तिः । इत्यादि ।

**End.** अरूपतया विवाहजन्यताकपविशेषणरचितेन विवाहजन्यतावच्छेदकी-भूतसंस्कारनिष्ठविलक्षणधर्म्मेण विशेषणत्वेन स्वीकारव्यावर्त्तकत्वेनेत्यर्थः । ब्राह्मणादिजात्यावच्छिन्नं नाशयस्वत्वेन विवाह इति चेन्न नाशशक्तावसमर्थ-वाक्यादेर्विवाहेऽव्याप्तिरिति ।

**Colophon.** इति तिथ्याद्यवादार्थः समाप्तः ।

विषयः । विवादस्य तात्पर्य्यप्रदर्शनपुरःसरं सम्यगर्थप्रकाशनं ।

---

**No. 273.** विष्णुतत्त्वनिर्णयटीकाविवरणम् ॥ . Substance, country-made paper, 10 × 3 inches. Folia, 85. Lines, 11 on a page. Extent, 2,000 slokas. Character, Nāgara. Date ? Place of deposit, Tikāri Fort, Paṇḍit Sāstri. Appearance, very old. Prose. Incorrect.

**Beginning.** श्रीवेदव्यासाय नमः ॥

योऽसृजत् सकलं जगत् प्रकृतिमुपादाय रजसा ।
सृजति तदनुप्रविश्य सकलं सत्वेन संरक्षति ॥
यो चेदं सकलं गुणेन तमसा संचर्णुमुद्योतते ।
तं श्रीश्चादिगुणं परं प्रियतमं वन्दे श्रियासंयुतं ॥
सज्जनाभीष्टमज्ञानविनाशायाकरोद्बुधः ।
भाष्येदं तमहं मध्वाचार्य्यं वन्दे गुरुं परं ॥
श्रीमज्जयतीर्थपूज्यचरणो ग्रन्थादौ मङ्गलमाचरति विश्वस्येति ॥ अयं रमावल्लभं वन्द इत्यर्थः ग्रन्थारम्भे वाग्व्यापारस्यापेक्षितत्वात् तस्य वन्दनस्यावश्यकर्त्तव्यत्वात् पार्थक्येन वन्दने स्वातन्त्र्यप्रतीतिः स्यात् तदर्थं रमावल्लभमित्युक्तं ।

**End.** अतएव रजतत्वविशिष्टस्य रजतस्य स्वरूपारोप इति रजतत्वं तत्र मुख्यं तत्वौपचारिकमिति प्रसिद्धमितिभावः । प्रादुर्भावस्योत्पत्तिशब्दार्थत्वं गौण्याद्यस्येत्याह प्रादुर्भाव इति ॥

**Colophon** इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्यविरचितस्य विष्णुतत्वनिर्णयस्य टीकायाविवरणं द्वितीयः परिच्छेदः ॥

विषयः । आनन्दतीर्थकृतविष्णुतत्वनिर्णयस्य टीकाया व्याख्यानं ।

---

**No. 274.** विष्णुतत्त्वप्रकाशः Substance, country-made paper, 12 × 5 inches. Folia, 85. Lines, 11 on a page. Extent, 2,800 slokas. Character, Nāgara. Date ? Place of deposit, Tikāri Fort, Paṇḍit Vāmācāri Sastri. Appearance, tolerable. Prose. Generally correct.

Beginning. श्रीकृष्णाय नमः ॥

श्रीवंशीजयुगे यदङ्घ्रिकमलं संधातुकामा सदा
यस्यामां शिरसा वहन्ति विबुधा ब्रह्मेशशक्रादयः
योगीशा मनसार्चयन्ति यमजं संशोधितेनानिशं
गोप्यावद्ध उलूखले निवशोऽयकोमुकुन्दोऽपि सः ।
श्रीव्यासं माधवं वन्दे मयि सद्दंनदीक्षितं ।
जयाख्यं तान्त्रिकाचार्य्यं तथान्यान् चालनां वरान् ॥
पादाब्जं श्रीगुरोर्नत्वा आश्रये वनमालिना ।
विष्णुतत्त्वप्रकाशोऽयं प्रीतये कमलापतेः ॥
इह निखिल श्रुतिस्मृतीतिहासपुराणानि तात्पर्य्यनिर्णायकोपक्रमादि-
लिङ्गोपेतानि सपहराधाराप्युनर्भवनिष्कतां पुंसां ध्येयं श्रेयं रमापतिमेक-
मत्येनामनन्ति । इत्यादि ॥

End. वर्षे वर्षे महादेवि नरानारी पतिव्रता शिवरात्रौ महादेवं नित्यं भक्त्या
प्रपूजयेदिति शैवाश्रुतेर्नेदं व्रतं नित्यमिति येन कथचि शिवरात्रौ शिव
पूजैवोक्ता न तु व्रतमित्यनित्यमेव व्रतमिति ॥ * ।
प्रकाशे विष्णुतत्त्वस्य रचिते वनमालिना ।
परिच्छेदो द्वितीयोऽयं समाप्तश्चाच्युतेच्छया ॥ * ॥
श्रीगोविन्दविहारभूषितभुवो वृन्दावनात् प्राग् दिशि
क्रोशानां त्रियुगे पुरे द्विजवरा उच्चैर्भरद्वाजजाः
श्रीपवाचमुखो वसन्ति सुकुले तेषा प्रसूतेन वै
पुत्रः श्रीवनमालिना विरचितो विष्णुप्रकाशोमुदा ॥
× × × × × ×
क्रियात्सुवैभवं वाचामपराधेन शोधनं ॥

Colophon. — — — — —

विषयः । १ परिच्छेदे श्रुतिस्मृतीतिहासपुराणवचनादिभिः शिवादितो विष्णोर्भेदकथनेन तन्माहात्म्यादिकथनं ॥ २ परिच्छेदे सर्व्वदेवेषु विष्णोराराधनीयत्वकथनेन पञ्चरात्रविधानादि-कथनं ॥ विप्राणां त्रिपुण्ड्रधारणे दोषकथनं ॥ एकादशीनाशे दोषकथनं ॥ शिवरात्रिव्रता-नित्यत्वकथनेन तस्मिन् वैष्णवानामनधिकारकथनं ॥

No. 275. विष्णुतत्त्वविनिर्णयः. Substance, country-made paper, 10×4½ inches. Folia, 26. Lines, 9 on a page. Extent, 400 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. श्रीवेदव्यासाय नमः ।

सदा गणेकविशेयं समतीतक्षराक्षरं ।
नारायणं सदावन्दे निर्दोषाशेषसद्गुणम् ॥
विशेषणानि यानीह कथितानि सदुक्तिभिः ।
साधयिष्यामि तान्येव क्रमात् सज्जनसंविदे ॥

End. अनन्तायाखिलेशाय निर्दोषगुणरूपिणे ।
प्रेयसे मे सुपूर्णाय नमो नारायणाय ते ॥

Colophon. इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्यविरचिते श्रीमद्विष्णुतत्त्वविनिर्णये तृतीयः परिच्छेदः समाप्तः ।

विषयः । माध्वमते विष्णोर्यथार्थनिर्णयकथनम् ॥

---

No. 276. विष्णुसहस्रनाम (कुलानन्दसंहितीयं) । Substance, country-made paper, 15×3½ inches. Folia, 6. Lines, 9 on a page. Extent, 200 slokas. Character, Bengali. Date S.K. 1778. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Late Paṇḍit Rāmtāran Śiromaṇi. Appearance, fresh. Verse. Generally correct.

Beginning. ॐ नमो भगवते वासुदेवाय । श्रीदेव्युवाच ।

भगवन् सर्व्वमन्त्राश्च भवता मे प्रकाशिताः ।
चतुःषष्टिश्च तन्त्राणि मातृकासुत्तमानि च ॥
कलापदं कलाधारं तथान्यत् कुब्जिकामतं ।
नानाकारश्च बीजाढ्यं तोतलं तोतलोत्तरं ॥
... ... ... ... ... ... ।
भवतोक्तानि मे देव सर्व्वज्ञानमयानि च ॥
विष्णोर्नामसहस्रञ्च मया यद्यं मुहुर्मुहुः ।
न कथ्यते कथं देव नाममोक्षप्रदायकं ॥ इत्यादि ।

End. इतीदं कथितं देवि विष्णोर्नामसहस्रकं ।

अहं सदाशिव क्षोभो यतः सर्व्वप्रवर्त्तकः ॥

× × × × × ×

तामेव विद्यां मनसि कृत्वा शङ्करमार्गगा ।
सर्व्वं हृष्टमशेषेण शङ्कराय न्यवेदयत् ॥
तच्छ्रुत्वा परमप्रीतो देवो देवीञ्च सस्वजे ।
रहस्यकथितं सर्व्वं भैरवि प्राणवल्लभे ॥

**Colophon.** इति कुलार्णवसंहितायां चत्वारिंशत्सहस्र्यां भैरवभैरवीसंवादे महाप्रकृतिनिर्वत्तं श्रीविष्णोर्नामसहस्रं समाप्तं ॥ ॐ तत्सत् । लिपिरियं श्रीरामतारणशर्म्मणः । वीरभूमौ सिउड़िग्रामे त्वरया यत्नेन लिखितमिदं । शकाब्दाः १०७८ ज्यैष्ठस्य २२ दिवसे ।

विषयः । श्रीविष्णोः सहस्रनाम कथनं ।

---

**No. 277.** विष्णुसहस्रनामभाष्यं । Substance, country-made paper, 16×3 inches. Folia, 50. Line, 8 on a page. Extent, 1,200 slokas, Character, Bengali. Date S.K. 1778. Place of deposit, Zilla Midnapur. Post Garvetā, Grām Khunverā, Late Paṇḍit Rāmtāraṇ S'iromaṇi. Appearance, fresh, Prose. Correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥
कृष्णद्वैपायनं व्यासं सर्व्वलोकहितेरतं ॥
वेदान्तभास्करं वन्दे समाधिनिलयं मुनिं ॥

सहस्रमूर्त्तेः पुरुषोत्तमस्य
सहस्रनेत्राननपादबाहोः ।
सहस्रनामस्तवनं प्रशस्तं
निरुच्यते जन्मजरादिशान्त्यै ॥

श्रीवैशम्पायनो जनमेजयमुवाच । श्रुत्वा धर्म्मानित्यादि ॥ इत्यादि ।

**End.** इमं स्तवमित्यादिना सहस्रनाम्नाम्नेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्व्वैरर्थिभिः सादरं पठितव्यं सर्व्वफलसिद्धये इति दर्शयति ।

प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्त्तारं को न मुच्येत बन्धनादिति ॥
सहस्रनामसम्बन्धिव्याख्या सर्व्वसुखावहा ।
श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः ॥
चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत् ।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥
सहस्रनामव्याख्येयं भक्तज्ञानप्रदीपिका ।
शङ्कराचार्य्यभगवत् पादाचार्य्येण निर्म्मिता ॥

**Colophon.** इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशङ्करभगवत्कृतौ श्रीविष्णोः सहस्र-नामभाष्यं सम्पूर्णं । शुभमस्तु शकाब्दाः १७१८ ।

**विषय ।** श्रीविष्णोः सहस्रनामव्याख्यानं ।

---

**No. 278.** बीजवर्णाभिधानटीका. By गौरमोहनभट्टः. Substance, country-made paper, 14×4 inches. Folia, 4. Lines, 9 on a page. Extent, 110 ślokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Medrā, Babu Pārvatī Caraṇa Bhaṭṭāchāryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमः परदेवतायै ।

आदौ प्रथमतः बीजवर्णानां बीजानिच वर्णाश्च ते × × × × × × × × स्फुटं व्यक्तं यथा स्यात् तथा उच्यते कथ्यते तत्र × × × ग्रन्थं प्रवर्त्तयेत् प्रवर्त्तयतीत्यर्थः तु अन्ते यस्य स लन्तः अथ आदौ यस्य सोऽयादिः लन्तोऽयादिश्च न पूर्व्वभाक् पूर्व्वं न भजतीत्यर्थः । प्रतिज्ञावचनानन्तरं सामान्याक्षरमानाद्यवर्ग-लक्षणमाह वर्णोऽक्षरमित्यादि वर्णाद्यर्णान्तचतुष्कं सामान्याक्षरे स्वरादि-द्वयं स्वराक्षरे ककारादिमकारपर्य्यन्तं पञ्च पञ्च भूत्वा वर्गाः स्युः परं याद्यर्णान्तचतुष्कं शाद्यर्णान्तचतुष्कञ्च क्रमेण वर्गद्वयं स्यात् । इत्यादि ।

**End.** मायाया बीजत्वेन कामबीजं वा कामादीनां वर्णतया तत् साधर्म्यात् मायाया तृतीयस्वरत्वपाठाच्च परन्तु गुरुपदेशवचनान्तरैकवाक्यत्वेन

तातृपर्य्यमवगत्य अवचनीयं अन्यथा "अक्षीः पद्म × × , × योनि-
युता च शंक्ति"रितिवोक्ष्याः परापदेश वा न परावीजं मायावीजं वा
पाद्यं इत्यत्र न नियामकः स्यात् ।

**Colophon.** इत्युपेन्द्रभट्टवंशीयश्रीगौरमोहनभट्टरचिता वीजवर्णाभिधानटीका समाप्ता ।

विषयः । वीजवर्णाभिधानस्य व्याख्यानं ।

---

**No. 279. वीरमाहेन्द्रकाण्डं.** Substance, country-made paper, 14×5 inches, Folia, 10. Lines, 10 on a page. Extent, 370 slokas. Character, Bengali. Date ? Place of deposit, Dinājpura Rāj Vāti. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अथ वाचं निशम्यायं स्कन्दस्यां गुणशोदितां ।
वीरस्थेनं करचाङ्गह्या निःश्वस्याथ तदा द्विजाः ॥

**End.** गत्वा तु मधुना तात जित्वा सर्व्वानिमान् रणात् ।
बद्धः त्वं सर्व्वसेनाभिः प्रापयिष्यामि ते ऽन्तिकं ॥
निशम्यैवं वचःप्रोक्तं सुपुत्रेण तदासुरः ।
सम्प्राप्तो विस्मयं मं ग्माययासुरनायकः ॥ * ॥

**Colophon.** इति श्रीस्कन्दपुराणे शङ्करसंहितायां शिवरहस्यखण्डे वीरमाहेन्द्रकाण्डे सप्तमोऽध्यायः ॥ * ॥ वीरमहेन्द्रकाण्डं समाप्तं ॥

विषयः । असुरादीनां वीरत्वप्रकटनं ।

---

**No. 280. वृत्तरत्नावली. By चिरञ्जीव.** Substance, country-made paper, 13×4½ inches. Folia, 11. Lines, 8 on a page. Extent, 187 slokas. Character, Nāgara. Date S'aka 1653. Place of deposit, Benares City, Govinda Bhaṭṭa. Appearance, old. Verse. Correct.

**Beginning.** नमोगुणविनाशिनी सकलकामसूद्योतनी ।
धरामलविदारिणी अकृसमाजविद्वेषिणी ॥
कलानिधिसवाधिनी जगदशोकपीडाशिनी ।
मदन्मारवलम्बिनी भवतु कापि कादम्बिनी ॥ १ ॥

श्रीगोवर्द्धनभूपनन्दन तव श्रीदाम वीरस्फुरत्
संग्रामे यशवन्तसिंहमहिमारम्भातिसंभावना ।
सर्वाङ्गेष्ठुकवन्धकन्धरगलद्धारारभारामोदिता ।
साध्वी सत्ययोगिनीभिरभितः सम्मर्द्दयत्याशिषा ॥ १ ॥

**End.** द्वैताद्वैतमताद्दिभिर्नयविधिप्रोद्बुद्धबुद्धिः सुतो ।
भट्टाचार्य्यशतावधान इति यो गौड़ोद्भवोभूत् कविः ॥
नानाशास्त्रविदात्मजेन सुचिरंजीवेन दत्ता मुदे ।
गौड़श्रीयशवन्तसिंहनृपतेः श्रीहृत्तरत्नावली ॥

**Colophon.** इति श्रीचिरंजीवेन शतावधानभट्टाचार्य्यात्मजेन विरचिता वृत्तरत्नावली समाप्तिमिता । शकाब्दाः १६५६ .

**विषयः ।** छन्दोग्रन्थः .

---

**No. 281.** वृद्धिश्राद्धपद्धति . By अनन्तदेव. Substance, country-made paper, 12×5 inches. Folia, 61. Lines, 10 on a page. Extent, 1220 slokas. Character, Nāgara. Date Saṃvat 1764. Place of deposit, *Bibihāṭi*, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीमन्महागणपतये नमः ।

नत्वा श्रीगुरुपादाब्जं वृद्धिश्राद्धस्य पद्धतिं ।
उद्धवस्य तनुजोहं करोमि शिष्टसम्मतां ॥
विविधः + + + संप्रदायमतां तथा ।
माध्यन्दिनीयविधिना शोधयन्तु धिया बुधाः ॥

**End.** श्रीशम्भोश्चरणद्वन्द्वमाधाय हृदयाम्बुजे
श्रीउद्धवतनूजेन विश्वेशपुरवासिना ।
रचितोऽनन्तदेवेन वृद्धिश्राद्धविनिर्णयः
गुरवः + + तुष्यन्तु विद्वांसश्च तथा मयि ॥

**Colophon.** इति श्रीमद्द्विवेद्युद्धवात्मजानन्तदेवकृतं चाभ्युदयिकनिरूपणं समाप्तिमगमत् . संवत् १७६४ . आषाढ़शुक्लासप्तम्याम् ।

**विषयः ।** वृद्धिश्राद्धविध्यादिकथनम् ।

---

**No. 282. वृन्दावनकाव्यटीका.** By रामनारायण. Substance, country-made paper, 13×3½ inches. Folia, 10. Lines, 9 on a page. Extent, 250 slokas. Character, Bengali. Date ? Place of deposit, Zillā Midnapur, Post Garvetā, Grām Bhattagrām, Pandit Rāmhṛdaya Bhattācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीदुर्गायै नमः ।

नत्वा नन्दव्रजानन्दपरं गोपालरूपिणं ।
परमानन्दसन्दोहकरं गोपवरं हरिं ॥
यमकश्लेषचित्रार्थपताकाचान्द्रशेखरिः । (?)
रामनारायणः श्रीमान् जयेत् यष्टीकयाकरोत् ।
वृन्दावनाख्यकाव्यार्थं स्फुटं मानाङ्कभाषितं ॥
रामनारायणो प्राज्ञो बुधैर्न दोषचिन्तया ।
नहि सर्व्वार्थवित् कश्चित् जायते मानुषोभुवि ॥

मानाङ्कनामा कविः श्रीकृष्णस्य वृन्दावनलीलां विविधयमकश्लेषवर्णनेन प्रकाशयन् वृन्दावनाख्यकाव्यनामतया निदर्शनीकृत्य काव्यविघ्नविनाशन-रूपतया तन्मुखबन्धतयाच प्रथमं कृष्णरतिरूपमङ्गलमाह । वरदायेति । इत्यादि ।

**End.** स प्रसिद्धो बली बलरामः तं प्रसिद्धं पीतवाससं श्रीकृष्णं इति वचनमाह कथितवान् कुत्रेत्याह पशुमतां गोपानां × × × × टते बली कीदृक् आयतनेत्रः दीर्घचक्षुः तं कीदृशं कंसासुरादनुद्विग्नं चशङ्कि-तमिति यावत् पुनः कीदृक् किं कुर्व्वन् वा स्मितानां विमलतया दशने-र्द्दन्तैर्ज्जातानां (जट) इति प्रसिद्धानां छायां कान्तिं किरन्निव क्षिपन्निव कीदृशानां सलीलाजानां लीलया सञ्जातानां ॥

**Colophon.** बाणपक्षरसचन्द्रमिश्रिते
कृष्णचन्द्रपरचान्द्रशेखरिः ।
कल्पासु तर्केन्दुमिते शकाब्दे
श्रीरामनारायण देवशर्म्मा ॥
टीकां समुद्ग्रथ्य करोति यत्नं
राधाकृष्णपदस्य मुदा समर्पां ।
श्रीरामनारायण देवशर्म्मा
काव्यार्थमालोक्य करोति यत्नं ॥

मघाव द्दोषः कविभिर्विभाव्यः ।

यन्नाःयतां जीवनमाङ्ग × × ॥ श्रीदुर्गा ॥

विषयः । माखाङ्ककृतश्रीकृष्णलीलामयवृन्दावनकाव्यस्य व्याख्यानं ॥

---

**No. 283.** वेदस्तुतिभावार्थदीपिकादीपनं By राधारमणदास. Substance, country-made paper, $11 \times 5\frac{1}{2}$ inches. Folia, 19. Lines, 13 on a page. Extent, 700 slokas. Character, Bengali. Date ? Place of deposit, Dinājpur, Paṇḍit Kriṣṇadāsa Smṛtibhūṣaṇa. Appearance, new. Prose. Correct.

**Beginning.** श्रीकृष्णचैतन्यचन्द्राय नमः ।

श्रीचैतन्यं नृसिंहं मुरारिं

विद्वद्वर्य्यं श्रीधरं भक्तमुख्यं ।

मिश्रं चन्द्रं गोकुलोपाधिकञ्च

नत्वा कुर्व्वे व्याकृतिं व्याकृतेस्तां ॥

राधारमणदासेन राधारमणसेविना ।

श्रुतिस्तुतेः स्वामिटीकाव्याख्यानं क्रियते ऽद्भुतं ॥ इत्यादि ।

**End.** उपनिषद्भिर्नीराजिते पदाम्बुजे यस्य तं, कर्म्मिणो भजनेन भोगप्रदं, नचस्य योगप्रदं, "ददामि बुद्धियोगं तं येन मामुपयान्ति" । इति गीतोक्तेः ॥

गोवर्द्धनोपासकस्य पुत्रः श्रुत्यर्थसम्भवं ।

राधारमणदासोऽयं व्याख्यानमकरोन्मुदा ॥

कृष्णगोविन्दमिश्रेण राधारमणदासेन दीपिकादीपनं कृतं ॥

**Colophon.** इति श्रीभागवते दशमस्कन्धे श्रुतिस्तुतौ भावार्थदीपिकादीपने सप्ताशीतितमोऽध्यायः ॥

विषयः । स्वामिकृत-भागवतदशमस्कन्धीय-श्रुतिस्तुतिव्याख्याया भावार्थदीपिकाया व्याख्यानं ।

---

**No. 284.** वेदान्तसिद्धान्तमुक्तावली By वनमाली. Substance, country-made paper, $9 \times 4\frac{1}{2}$ inches. Folia, 146. Lines, 12 on a page. Extent, 4,500 slokas. Character, Nāgara. Date S.M. 1873. Place of deposit, Ṭikāri, District Gayā, Paṇḍit Vāmācārī. Appearance, tolerable. Prose. Correct.

**Beginning.** प्रथमपत्रं नास्ति तेन द्वितीयपत्रप्रारम्भो लिखितः ॥

तदर्थं विचारविधेर्विषयादिकं न सम्भवति उत सम्भवति, तदर्थं विषयी-भूतब्रह्म जीव एव उतान्यदिति । यदि प्रत्यग्भूतो जीवस्तदा तस्य निश्चित-त्वेन विषयाभावादनारम्भणीयं शास्त्रं यद्यन्यद्ब्रह्म तदा तस्यानिश्चितत्वेन विषयसम्भवाच्छास्त्रमारम्भणीयमिति ॥ इत्यादि

**End.**

कृतनिगमविभागं योगिभिः सेविताङ्घ्रिं

धृतमुनिवरवेशं वासुदेवांशमीशं ।

यतिगुणमकरंशं श्रीमदानन्दतीर्थं

मतिनिधिजयतीर्थं व्यासतीर्थञ्च वन्दे ॥

श्रीगोविन्दविचारभूषितभुवो वृन्दावनात् प्राग्दिशि

क्रोशानां त्रियुगे सुभुविये? विप्रा भरद्वाजजाः ।

श्रीसन्नाथसुतो वसन्ति सुकुले तेषां सुजातेन वै

वर्णिश्रीवनमालिना श्रुतिनये वृत्तिः समाप्ता कृता ॥

**Colophon.** इति श्रीवनमालिविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां चतुर्थाध्यायस्य चतुर्थः पादः ॥ शुभमस्तु संवत् १८७१ ॥

विषयः । जीवब्रह्मनिरूपणं ॥ जीवब्रह्मणोरभेदज्ञाने मुक्तिरित्याद्युपन्यासेन मुक्ति स्वरूपादिनिरूपणं ॥

---

**No. 285.** वेदिपद्धतिटीका By मयूरेश. Substance, country-made paper, 10×3 inches. Folia, 20. Lines, 13 on a page. Extent, 520 slokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

ढुण्ढिं विश्वेश्वरं विष्णुं नत्वा देशिककाशिकां ।

मयूरेशः प्रकुरुते वेदिपद्धतिकाशिकां ॥ टीकामिति शेषः ॥

**End.** यथामति कृता व्याख्या सुबोधा वेदिपद्धतेः ।

विचार्य साध्वसाध्वत्र शोधनीयं प्रयत्नतः ॥

**Colophon.** इति श्रीमौद्गल्यगोत्रान्वयकूपनमोपेत्युपनामकगोपालोपाध्यायतत्पुत्रपोतमो-पाध्यायात्मज मयूरेश्वरोपाध्यायविरचिता स्वकृता वेदिपद्धतिटीका सम्पूर्णा।

विषयः । यज्ञवेदिनिर्माणपद्धतिव्याख्या ।

---

No. 286. वैद्यकसारः (शंकराख्यः) By रामचन्द्र. Substance, country-made paper, 6×5 inches. Folia, 9. Lines, 15 on a page. Extent, 180 ślokas. Character, Nāgara. Date S'aka 1725. Place of deposit, Benares City, Govinda Bhatta. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

स्वाख्यां लोके शरणममलं देववैद्याश्विनौ तौ ।
रोगग्रस्तो वदति कृपया वाञ्छि मां रोगभिन्नौ ॥
तस्मै दद्याद्द्वयमिति तं वैद्यधन्वन्तरित्वं ।
नत्वा रामोऽखिलसुखकरं शंकराख्यं प्रवक्ष्ये ॥
दूतः प्रश्नो हृदयकलना नाड़िकारोगलक्ष्य ।
मत्रं दाचो वमनविमलं लेखनं स्वेदनं च ॥

**End.** गायन्तो शतशृङ्गमिलशिखरे श्रीचण्डिका संस्तुतैः ।
श्लोकै वैद्यकसंज्ञकैः सुललितैर्छन्दोविचित्रैः शतैः ॥
भक्तानां गदनाशनाय विमलस्तुत्या मया प्रार्थिता ।
दत्तं शास्त्रमिदं धूमन्तु यशसा श्रीशंकराख्यं शुभं ॥

**Colophon.** इति रामचन्द्रविरचिते शंकराख्यवैद्यकसारः समाप्तः ।

विषयः । संक्षेपेण साधारणरोगाणां उपशमोपायकथनं ।

---

No. 287. वैयासिकन्यायमाला, सटीका, (वेदान्ताधिकरणमाला) By भारतीतीर्थमुनि । Substance, country-made paper, 11 × 5½ inches. Folia, 76. Lines, 12 on a page. Extent, 3,000 ślokas. Character, Nāgara. Date Saṃvat 1814. Place of deposit, Ṭikāri, District Gaya, Paṇḍit Vāmācāri Śāstri. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणं ।
वैयासिकी न्यायमाला श्लोकैः संगृह्यते मया ॥
एको विषयसन्देहपूर्व्वपक्षावभासकः ।
श्लोकोऽपरस्तु सिद्धान्तवादी सङ्गतयःस्फुटाः ॥
शास्त्रेऽध्याये तथापादे न्यायसङ्गतयस्त्रिधा ।
शास्त्रादिविषये ज्ञाते तत्तत् सङ्गति वक्ष्यताम् ॥ इत्यादि ।

श्रीगणेशाय नमः ।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणं । इत्यादि ॥

प्रारीप्सितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्तये ।

× × × प्रणम्येति व्यासेन प्रोक्ता वैयासिकी × वेदान्तवाक्यार्थ-निर्णायकान्यधिकरणानि न्यायास्तेषामनुक्रमेण ग्रथनं माला ॥ इत्यादि ।

End. स्वभावप्रकृतत्वेन खहृता नास्ति योगिनाम् :

स्वाराज्यमीशोभोगाय ददौ मुक्तिञ्च विद्यया ॥

ईश्वरो ह्युपासनया तोषितस्तेषां भोगमात्रसिद्धये

स्वाराज्यं ददौ, मुक्तिञ्च तत्त्वविद्योत्पादनेन ददौ ।

तस्मात् जगत्स्रष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यमस्ति ॥

Colophon. इति श्रीमत् परमहंसपरिव्राजकाचार्य्य-श्रीभारतीतीर्थमुनिप्रणीतायां वैयासिकन्यायमालायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ समाप्ता वेदान्ताधिकरणमाला । संवत १८१४ ॥ * ॥

विषयः । श्लोकेन ब्रह्मसूत्रस्याधिकरणादिनिरूपणं ॥ निरूपिताधिकरणस्य व्याख्यानञ्च ॥

---

**No. 288.** वैश्वदेवप्रयोगः By ढुण्ढि. Substance, country-made paper, 10 × 4 inches. Folia, 2. Lines, 10 on a page. Extent, 35 ślokas. Character Nāgara. Date Saṃvat 1855. Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

Beginning. श्रीगणेशाय नमः ।

अथ वैश्वदेवप्रयोगः ।

पञ्चमहायज्ञानाञ्चात्र वैश्वदेवमिति कर्म्मनामधेयं, एतच्च पञ्चमहायज्ञस्थान पृथग्भूतमिति हरदत्तः, तत्र प्रकरणभेदात् संज्ञाभेदः; यथा, तत् तथाचेतदिति सुदर्शनाचार्य्यः । इत्यादि ।

End. तत्र श्लोकः ।

द्वावेकं द्वौच चतुरः प्रत्येकं तु त्रयं दश ।

प्रत्येकमेकमेकं तत् परिषिञ्चेद्‌द्वचक्षीनिच ॥ इति ।

Colophon. इति वैश्वदेवपञ्चमहायज्ञानां प्रयोगो दत्तपुत्रिढुण्ढिविरचितः समाप्तः । संवत् १८५५ । पौषवदि ।

विषयः । वैश्वदेवविधिः ।

---

**No. 289.** **वैश्वानरोपनिषद् .** Substance, country-made paper, 9 x $4\frac{1}{2}$ inches. Folia, 2. Lines, 11 on a page. Extent, 65 slokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇdit Jagadbandhu Tarkavāgiśa. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ वैश्वानरः प्रपद्ये जातवेदा मम शान्तिं प्रयच्छतु । दारेषु पुत्रेषु धनेषु वस्त्रेष्वश्वेषु गोषु ग्रामेषु नगरेषु स सप्तार्चिः सप्तजिह्वः सहितमुखः स प्रवधारी सर्व्वदेवानां मुखं स सर्व्वभुक् स विष्णुः स ब्रह्मस्वरूपश्च प्रज्ञा-भास्वरूपश्च शान्तिं करोति । इत्यादि

**End.** एतदुपनिषदधीयानः सर्व्वान् कामानवाप्नोति सर्व्वान् पापान् नाशयति ब्रह्महत्यायाः पूतो भवति सुरापानात् पूतो भवति दीर्घायुराप्नोति धनधान्येन समृद्धो भवति सर्व्वं वाञ्छितमाप्नोति । ॐ तत् सत् ।

**Colophon.** इति वैश्वानरोपनिषत् समाप्ता ।

---

**No. 290.** **वैष्णवचन्द्रिका** By **रामानन्द** and **वनमाली** । Substance, country-made paper, 11 x 3 inches. Folia, 4. Lines, 7 on a page, Extent, 130 slokas. Character, Bengali. Date ?, Place of deposit. Upalatā Grām, Post Mehār, Zilla Comilla, Paṇdit Jagadbandhu Tarka-vāgiśa. Appearance, fresh. Verse. Generally correct.

**Beginning.**

संसारार्णवमज्जमानपुरुषत्राणाय गोलोकतो ।
प्राविर्भूत इव स्वयं सुपरमे वृन्दावने लीलया ॥
श्रीकृष्णः सह राधया परिचरे नन्दादिभिर्यः कलेः ।
सर्व्वो मद्धृदये सदा निवसतात् कारुण्यमात्रध्वज सः ॥
श्रीराधाकृष्णयोरादौ स्वरूपप्रदर्शनं ।
कारणञ्चावतारे तत् प्रापणे भक्तिलक्षणं ॥
भक्तानां लक्षणं पश्चात् प्रवृत्तादिप्रभेदतः ।
पुराणादिकशास्त्रेभ्यस्तन्त्रसारादिसंग्रहात् ॥
समुद्धृत्य मतात् तत्त्वात् संक्षेपात् तद्विरच्यते ।
न्यायवागीशविख्यातश्रीरामानन्दशर्म्मणा ॥ इत्यादि ।

**End.**

देवान् पितॄन् विप्रगणान् प्रणम्य
प्रातः समुत्थाय गुरोः पदाब्जं ।

ध्यात्वा कृष्णचरित्नाम कीर्त्तयन्
प्राणान् चित्तोविसृजेत् चित्तौ रत्नौ ॥
धर्म्मानशेषान् परित्याय वैष्णवस्यत्नाश्रमः प्रवदन्नाम नाथं ।
गोलोकनाथं सह राधया कृष्ण विभाव्य दास्यं परमोऽस्य याति सः ॥
मत्योः प्राग्दिवसे समाप्तिमगमत् स्वप्नावसिद्धः श्रिया
रामानन्दविपश्चिता तदनु तच्छात्रेण यत्नादयं ।
ग्रन्थः श्रीवनमालिनामवसुना कार्य्योऽवशिष्टस्ततो
द्वाभ्यां वैष्णवचन्द्रिकाख्यतमयी सम्पूर्णता मागता ॥

विषयः । वैष्णवकर्त्तव्यक्रियाकलापनिरूपणम् ।

---

No. 291. व्यवस्थासंग्रहः By अनिरुद्ध. Substance, palm leaves, 13 x 2 inches. Folia, 108. Lines, 5 on a page. Extent, 1,700 slokas. Character, Bengali. Date ? Place of deposit, Dinājpur, Babu Giris Candra Cakrawartti, Pleader. Appearance, very old. Prose and Verse Correct.

Beginning. प्रणम्य पुण्डरीकाक्षं पूर्व्वाचार्य्यप्रवर्त्तितः ।
व्याख्या मन्वादिशास्त्राणां समालोच्य विविच्यते ॥
विमृशिरनिरुद्धेन स्वबोधविभवावधि ।
बोधार्थमल्पबुद्धीनां प्रवृत्ताः × × × ॥

मनुः ॥

जातदन्तेऽनुजाते च कृतचूडे च संस्थिते ।
अशुद्धा बान्धवाः सर्व्वे सूतके च तथोच्यते ॥
जातदन्तादनुपश्चाज्जातोऽनुजातदन्त इत्यर्थः ॥

End. धर्मं बपिहितं ।

विषयः । जननमरणाद्यशौचव्यवस्थाकथनं ॥ श्राद्धविधिकथनं । तदधिकारिनिरूपणञ्च ॥

---

No. 292. व्यवस्थासारसंग्रहः By रामनाथ. Substance, palm leaves 15 x $1\frac{1}{2}$ inches. Folia, 84. Lines, 2 on a page. Extent, 750 slokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgisa Appearance, old, Prose and verse. Generally correct.

**Beginning.** ॐ नमो गुरवे नमः ।

नत्वा लक्ष्मणपदद्वन्द्वं श्रीरामनारायणशर्म्मणा ।
क्रियते ऽतिप्रयत्नेन व्यवस्थासारसंग्रहः ॥

अथ सामान्यतः सर्व्वतिथिव्यवस्था । यद्यपि रात्र्यादिपर्य्युदस्त × कालोऽपि कर्म्मयोग्यस्तथापि मुख्यकाललाभे प्रशस्तत्वात् स एव नियामकः । मुख्यकालस्तु दैवकृत्ये त्रिधाविभक्तदिनस्य पूर्व्वाह्नः । मनुष्यकृत्ये मध्याह्नः । पितृकृत्येऽपराह्नः । तिथेः पूर्व्वकालापेक्षा तु विधेयकर्म्मण्येव निषिद्धकर्म्मणि तु तिथिमात्रापेक्षा यत्र तु उभयदिने कर्म्मकाले तिथिलाभोऽलाभो वा तत्र तत्तिथिविहितं पूजादिकं कुत्र कर्त्तव्यमिति सन्देहे युग्मादिना व्यवस्था । इत्यादि ।

**End.** परचक्रोपघातांश्च ।

यथा शस्त्रप्रहाराणां कवचं विनिवारणम् ।
तथा दैवोपघातानां शान्तिर्भवति वारणं ॥

शान्तिधर्म्मद्वारा दैविकानिष्टस्य त्वरितनिवृत्तिरिति दर्शनान्मलमासेऽशौचे च स्वस्त्ययनं कार्य्यं ।

शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहासनं ।
शूद्रविद्यागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥
पितृश्राद्धे तु शूद्राणां यो भुङ्क्ते ब्राह्मणाधमः ।
सुरापी ब्रह्मघाती च पितृदेवार्च्चनाद्बहिः ॥
तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजानां करसंस्पर्शात्तदन्नं परिचक्षते ॥ हरये नमः ।

**Colophon.** अतः परं खण्डितत्वात् समाप्तिसूचकं वाक्यं नास्ति ।

विषयः । व्यवस्थासारसंग्रहेऽस्मिन् सन्ति केचन जटिलव्यवस्थानां संग्रहाः तत्र प्रथमे तिथिव्यवस्था सा पुनर्युग्मायुग्मभेदेन द्विविधा । संक्रान्तिव्यवस्था अशौचव्यवस्था सपिण्डीकरणादि-व्यवस्था शान्तिकर्म्मव्यवस्था च ।

---

**No. 293.** **व्यवहारसूत्रं.** Substance, country-made paper, 12 × 5 inches. Folia, 46. Lines, 7 on a page. Extent, 1,000 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dikmaṇḍalācāryya Mahārāja Bālacandra Suri. Appearance, old. Verse. Correct.

**Beginning.** श्रीमाल्लिजिनाय नमः ।

जो भिक्खू मासियं परिहार ठाणं
परिसेविता आलोएज्जा अपलिउ
चियं आलोएमाणस्समासियं पलिउंचियं
आलोए माणस्सदो मासियं ।

**End.** साहम्मिय वेयावच्चं करेमाणे समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवइ ।

**Colophon.** ववहारस्स दसमो उद्देसो सम्मत्तो । ववहारसूत्रं समाप्तम् ।

विषयः । जैनसाधूनां व्यवहारकथनम् ।

---

**No. 294.** व्रतोद्यापनोपयोगिपदार्थनिर्णयः. Substance, country-made paper, 10 × 3 inches. Folia, 20. Lines, 9 on a page. Extent, 380 ślokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācārya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

श्रीमहाकाली महालक्ष्मी-महासरस्वतीभ्यो नमः । श्रीसीतारामचन्द्राभ्यां नमः । अथ व्रतोद्यापनविषये किञ्चिदुच्यते, तत्रोद्यापनं नाम तत्तद्व्रते परिपूर्णे अपूर्णे वा कल्पोक्तं हवनदानब्राह्मणभोजनरूपः कर्मविशेषः ।

**End.** गीतायामपि ।

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ।

**Colophon.** इति व्रतोद्यापनोपयोगिविषयः समाप्तः ।

विषयः । व्रतोद्यापनोपयोगिपदार्थकथनम् ।

---

**No. 295.** आप्तस्तोमपद्धतिः By माधवाचार्य्यः. Substance, country-made paper, 8 × 3 inches. Folia, 5. Lines, 12 on a page. Extent, 100 ślokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācārya. Appearance, new. Prose and verse. Correct.

**Beginning.** नमस्कृत्याखिलां पूर्व्वान् पश्चानालोच्य यत्नतः ।
ब्रात्यस्तोमस्य सरणिं कुरुते माधवोऽर्भका ।
ब्रात्यशब्देनात्र पतितसावित्रीको गृह्यते ॥

**End.** प्रभूणां वसुरामाणां गुरो नव्यजीविकः ।
माधवः प्राकरोत् काश्यां ब्रात्यस्तोमस्य पद्धतिम् ॥

**Colophon.** इति माधवाचार्य्यशर्म्मप्रणीता ब्रात्यस्तोमसरणिः समाप्तिमगमत् ॥

विषयः । ब्रात्यानां संस्कारविधिः ।

---

**No. 293.** ग्रहादिमाहात्म्यस्य विद्यापत्ते व्याख्यानम्. Substance, country-made paper, 20 × 3 inches. Folia, 4. Lines, 8 on a page. Extent, 132 slokas. Character, Bengali. Date ? Place of deposit, Grām Bhadu-ghar, Post Brāhmanberia, Comilla, Paṇḍit Amarcandra Nyāyaratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीदुर्गा । ॐ नमः कृष्णाय ।
तस्मिन् दुरात्मनि अतिवीर्य्ये कंसासुरे सैन्ये च देश्या कृष्णेण निहते सुति ग्रहादयः तां पालकं कृष्णं तुष्टुवुः । देश्या इति दिवधातोर्विजीगिषार्थाद्व्यञ्जनात्मा × × × देश्यः प्रभावात् कंसेन जेतुमिष्टः स चासावश्चेति देश्या तसौयैकवचने अधातोरित्याकारलोपः धातोरित्यश्लोपलक्षणत्वात् आकारो वासुदेवः स्यादित्येकाक्षरकोषः । नापि ताय सन्तानपालनयोः तायतीति क्विप् यवोर्य्वलम इति यलोपः । इत्यादि ।

**End.** यद्वा भद्रं कृत्तु श्रीक्षमस्येति भद्रकाली रश्रुतेर्लश्रुतिरिति । अभ्यर्च्चिता अभ्यर्दानं प्राप्तः अभ्यर्च्चितं अयत इति क्विप् अभ्यर्थामभ्यर्च्चितं तद्यते-गत्यर्थत्वात् अयधातोः क्विप् यलोपश्च सा असुरान्तकारी × × × × × × × × अमधातोः क्विप् सप्लूतं प्राप्तः देवो श्रीडावान् देवशरीरेभ्यः गोपगोपीरूपेण शरीराण्यस्य ल्यवलोपे पञ्चमी जगचय-विनिर्मिणी विनिर्मिणोभाव एवमादित्वादन् क्वचिदधिकारात् इद्विमलोपा-भावः तद्विद्यते यस्य इन् प्रत्ययः जगचयचितेच्छावाम् पुनश्च गौरीदे-वासा पुनर्गौरीदेवपरिपचणेन अस्तदीप्त्यादानयोरसनं चः क्विप् भावे, अभ्यता पूर्ववत् उत्पत्तिं प्राप्तः उपकारिणी उपकारित्ववान् उपकारि-णीभाव एवमादित्वादन् क्वचिदधिकाराद्इद्विमलोपाभावः ।

**Colophon.** इति शङ्खाद्रिमाहात्म्यीयविष्णुपदव्याख्यानं सम्पूर्णं ।

विषयः । देवीमाहात्म्यीयशङ्खाद्रिमाहात्म्यस्य विष्णुपदे व्याख्यानं ।

---

**No. 297. शङ्करसंहिता.** Substance, country-made paper, 14×5 inches. Folia, 59. Lines, 10 on a page. Extent, 1.100 çlokas. Character, Bengali. Date ? Place of deposit, Dinājpur Rajbāḍi. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

ॐ कारनिलयं देवं गजवक्त्रं चतुर्भुजं ।
पिचिण्डिलमहं वन्दे सर्व्वविघ्नोपशान्तये ॥
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
× × × × × ॥
षोडशैतानि नामानि यः पठेत् शृणुयादपि ।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा
संग्रामे सर्व्वकार्य्येषु विघ्नस्तस्य न जायते ॥

**End.** सूत उवाच ।

अयन्तु सम्भवाख्यस्तु काण्डो वेदार्थसम्मितः ।
कथितः श्रेयसामेव निदानं विदुषां सतां ॥ * ।

**Colophon.** इति श्रीस्कन्दपुराणे शङ्करसंहितायां शिवरहस्यखण्डे सम्भवकाण्डे पञ्चाशत्तमोऽध्यायः ॥ सम्भवकाण्डं समाप्तं ॥

विषयः । १ सूतमुनिसंवादकथनं ॥ २ ग्रन्थमानकथनं । ३ तृतीयाध्यायात् पञ्चाशत्तमाध्यायं यावत् तारकासुरोपाख्यानवर्णनेन कुमारोत्पत्तिवर्णनादि ।

---

**No. 298. श्रलकल्याणस्तवनम्.** Substance, country-made paper, 12×5 inches. Folia, 3. Lines, 12 on a page. Extent, 72 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dikmaṇḍālacāryya Mahārāja Bālacandra Suri. Appearance, new. Verse. Incorrect.

**Beginning.** श्रीजिनाय नमः ।

दुरिय रय समीरं मोहपङ्कोहनीरं ।
पणमिय जिणवीरं निज्जियावज्जवीरं ॥

भवभङ्गपङ्किकुलं सम्यक्तुक्तान् × × लं ।
चरिथमिच्चसमूलं कि × × किमे निमूलधी ॥

End. एवं वीरजिने सने सथक्मं मोचान्विध्वंसनं
भव्यं भोरथकेच सोच जनयम् दोसाय कर्कयथम् ।
सोऽं अं० कुमलानुवन्धिकुमलं पक्षोर्मिकिञ्चित् को जा
उजानिजयक्षदि (..) सया पाय पणामि तुच ॥

Colophon. इति महावीर शतकषटकल्याणिकनिबन्धं स्तवनं समाप्तं ।

विषयः । मातुरन्यमातृगर्भे गमनम् । गर्भः । जन्म । दीक्षा । केवलज्ञानम् । निर्वाणम् ।

---

**No. 299.** शब्दवादः. Substance, yellow paper, 12×3 inches. Folia, 9. Lines, 8 on a page. Extent, ? slokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgiśa. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।
इति शब्दो हि द्विविधः । लिङ्गार्थविभाविकः पदार्थविभाविकश्च । लिङ्गार्थविभाविकः पदार्थविभावकश्चेति शब्दस्यानुकरणविषय एव प्रयोगः स्वाभाव्यात् लिङ्गः स्वरूपार्थस्याभिधायको लिङ्गार्थविभाविकः । पदप्रति पाद्यसंख्यान्वितविशेष्यीभूतशब्दस्वरूपार्थस्याभिधायकः पदार्थविभाविकः यथा हर्चेति ॥ इत्यादि ।

**End.** एवञ्चेदिति शब्दाभावोपि भूतलाद्यामित्यादौ तदध्याहारात् शब्दस्याभिधेय-शून्यत्वं कल्प्यं यत् तेनाध्याहारस्तत्र लक्षणया स्वरूपोपस्थापने प्रथमेवेतिदिक् । इति शब्दवादः समाप्तः इति ।

**Colophon.** श्रीकालीचरणोपान्ते भक्तिरस्तु सदा मम ।

विषयः । लिङ्गार्थविभाविकत्वपदार्थविभाविकत्वप्रकाशकप्रकृतिप्रत्ययादिना शब्दानां स्व-रूपत्वनिरूपणम् ।

---

**No. 300.** शान्तिशतकटीका By विद्याविनोदाचार्यचूडामणिः. Substance, country-made paper, 18×3 inches. Folia, 22. Lines, 6 on a page. Extent, 500 slokas. Character, Bengali. Date S.K. 1676. Place of deposit, Dinājpur, Paṇḍit Kṛṣṇadāsa Smṛtibhūṣaṇa. Appearance, tolerable. Prose. Correct.

**Beginning.** आदौ पञ्चद्वयं नास्ति । इदानीमाश्रमः पाण्डित्यं निन्दयन् ऐश्वर्य्यं कटाक्षयति श्लोकेति । ते क्षौणीभुजः राजानः वयमपि विद्वांसः क्षौणीभुजः इत्यादि ।

**End.** तेषामावश्यकता जन्मजरावियोगं मरणं दृष्ट्वा स्थितस्य आसो नोत्पद्यते न जायते यतःजन्म उत्पत्तिः जरा वार्द्धक्यं वियोगः इष्टविच्छेदः मरणं दशाविशेषः समाहारद्वन्द्वः सर्व्वद्वन्द्वो विभाषयैकवद्भवतीति ॥ *

**Colophon.** इति श्रीविद्याविनोदाचार्य्यचूड़ामणिकृतशान्तिशतकटीकायां चतुर्थपरिच्छेदः ॥ समाप्तश्चायं ग्रन्थः ॥ शक १६७६ ॥

विषयः । शान्तिशतकस्य व्याख्यानं ।

---

**No. 301.** शिक्षाभाष्यं or शिक्षाप्रकाशः. Substance, country-made paper, 15 x 5 inches. Folio, 9. Lines, 9 on a page. Extent, 180 slokas Character, Nāgara. Date ? Place of deposit, Benares, Gobinda Bhaṭṭa. Appearance, old. Prose. Correct.

**Beginning.** ज्योतिर्व्याकरणं छन्दः कल्पशिक्षानिरुक्तयः ।
येनाख्यपादो नः कर्णावस्य तं सततं नुमः ॥
व्याख्याय पिङ्गलाचार्य्यसूत्राण्यादौ यथायथं ।
शिक्षां तदीयां व्याख्यास्ये पाणिनीयानुसारिणीं ॥

**End.** स्वर्गं व्याप्नोति वा । द्विर्वचनं शिक्षाध्यायसमाप्त्यर्थं । विकृतिच्छन्दस्य × × × समसपरवक्त्रं इत्तं अर्द्धसमा अर्द्धं इत्यधिकृत्य अपरवक्त्रं × × × औपच्छन्दसिकमित्यादि लक्षणसूत्रात् ।

**Colophon.** इति शिक्षाप्रकाशः समाप्तः ।

विषय । वर्णानामुच्चारणप्रकारकथनम् ।

---

**No. 302.** शिवशतनामस्तोत्रं (महालिङ्गेश्वरतन्त्रोक्तं). Substance, country-made paper, 10 x $2\frac{1}{2}$ inches. Folio, 6. Lines, 6 on a page. Extent, 75 slokas. Character, Bengali. Date, S.K. 1776. Place of deposit, Zilla Midnapur, Post Garveta, Grām Khunverā, Paṇḍit Harānchandra Tarkavāgīśa. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीरामः ।

ॐ अस्य श्रीशिवशतनामस्तोत्रस्य श्रीनारद ऋषिरनुष्टुप्छन्दः श्रीसदाशिवो देवता ॐ नमः शिवायेति महाबीजं ह्रीं शक्तिः नमः कीलकं मम सर्व्वाभीष्टसिद्ध्यर्थे जपे विनियोगः । इत्यादि ।

**End.** एतज्ज्ञानं महेशानि पापण्डे मा वदेत् क्वचित् ।
मूर्खाय भक्तिहीनाय दुष्टाय सुदुरात्मने ॥
शिवभक्तिविहीनाय शक्तिनिन्दापराय च ।
न प्रकाश्यं महादेवि प्रकाशाच्छिवहा भवेत् ॥
शिष्याय भक्तियुक्ताय शिवविष्णुपराय च ।
शतनामस्तोत्रं तस्मै देयं महेश्वरि ॥

**Colophon.** इति महालिङ्गेश्वरतन्त्रे श्रीशिवपार्व्वतीसम्वादे शिवस्य शतनामस्तोत्रं समाप्तं ॥ ॐ तत् सत् ॥

यदक्षरं परिभ्रष्टं मात्राहीनञ्च यद् भवेत् ।
पूर्णं भवतु तत् सर्व्वं त्वत्प्रसादान्महेश्वरः ॥

शकाब्दाः १७७१ । ११ । १९ । लिपिरियं श्रीरामतारणशर्म्मणः ॥

विषय । श्रीमहादेवस्य स्तुतिकथनं ।

---

**No. 303.** शिवसहस्रनामस्तोत्रं ( उमायामलीयं ) . Substance, country-made paper, 16×4 inches. Folio, 3. Lines, 10 on a page. Extent, 120 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Late Paṇḍit Rāmtāraṇa Siromaṇi. Appearance, fresh. Verse. Correct.

**Beginning.** श्री श्री ॐ नमः शिवाय ।

देव्युवाच ।

ॐ देव देव महादेव ज्ञानसिन्धो कृपामय ।
यत्ते नामानि गुह्यानि पवित्राणि शुभानि च ।
तन्मे कथय मे देव यदि स्नेहोऽस्ति मां प्रति ॥

श्रीशिव उवाच ।

तानि ते कीर्त्तयिष्यामि भुक्तिमुक्तिकराणि च ।
गोप्यानि सर्व्वतन्त्रेषु न देयानि प्रयत्नतः ॥ इत्यादि ।

**End.** क्रूररोगा घोररूपा चक्रघ्नीः काकलौचिकाः ।
अतमाद् यत्र गच्छन्ति सायकत्र न संशयः ॥
वारमेकन्तु योऽधीयादृचमेवफलं लभेत् ।
जपे होमे तथा दाने यदि देवार्चने तथा ॥

**Colophon.** इति रुमायामले हरगौरीसंवादे परमशिवसहस्रनामस्तोत्रं समाप्तं ।
ॐ तत् सत् ।

विषय । शिवस्य सहस्रनामस्तुतिकथनं ॥

---

**No. 304.** शुकरहस्योपनिषत् . Substance, country-made paper, 11×4½ inches. Folio, 3. Lines, 12 on a page. Extent, 100 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Gobinda Bhatta. Appearance, new. Prose and verse. Correct.

**Beginning.** अथातो रहस्योपनिषदं व्याख्यास्यामः । देवर्षयो ब्रह्माणं संपूज्य प्रणिपत्य पप्रच्छुः भगवन्नस्माकं रहस्योपनिषदं ब्रूहि इति सोऽब्रवीत् ।
पुरा व्यासो महातेजाः सर्व्ववेदतपोनिधिः ।
प्रणिपत्य शिवं साम्बं कृताञ्जलिरुवाच ह ॥

**End.** पुत्रेण सहितः प्रीत्या परानन्दमुपेयिवान् ।
यो रहस्योपनिषदमधीते गुर्वनुग्रहात् ।
सर्व्वपापविनिर्मुक्तः साक्षात् कैवल्यमश्नुते ॥
इत्युपनिषत् ॥

**Colophon.** इति शुकरहस्योपनिषत् समाप्ता ।

विषय । व्यासशुकसंवादमभिमुखीकृत्य ब्रह्मविद्योपदेशः ।

---

**No. 305.** शुद्धिदीपिकाप्रकाशः By विष्णुदासदत्त . Substance, country-made paper, 13×3 inches. Folia, 86. Lines, 7 on a page. Extent, 2,000 slokas. Character, Bengali. Date S.K. 1636. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Late Paṇḍit Śripati Bhaṭṭācārya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
स्निग्धमाद्यं कमलया वन्दे वामकरार्पितं ।
हरिं येनाप्रमादेन गुरुं नरकनाशनः ॥

नभोमहीकोकनदं जनानां ।
नेत्रापहत्योरपहारकाणं ॥
सरोजशोभाकरकान्तिमण्डलं ।
दिवापतेर्मण्डलमाश्रयामि ॥

शिष्टानामयमाचारो यदभिमतदेवतानमस्कारपुरःसरमभिमतार्थसिद्धिं वाञ्छन्ति तदयमपि मद्दीक्षापनीयाचार्य्यश्रीश्रीनिवासो ज्योतिःशास्त्रस्य सूर्य्यकर्तृकत्वात् ग्रहराजत्वाच्च सभासदाद्याशीर्व्वादख्यानेन रविं स्तुवन्नाह ह्योति । इत्यादि ।

**End.** अत्रेमां स्वग्रन्थस्यान्यग्रन्थादुपादेयत्वमाह । सुविस्तरादिति । अतिविस्तर-ज्योतिर्ग्रन्थात् श्रीश्रीनिवासनाम्नाचार्य्येण उद्धृतां संक्षेपेण गृहीतां इमां शुद्धिदीपिकां सुशिक्षिता अभियुक्ताः शिष्या बिभ्रतु धारयन्तु । × × × × × × × × × × × × × ×
तथाहि वृहज्जातके जातकविचार एव । अत्र ग्रन्थे तु सर्व्वकर्म्मविधानं संक्षिप्योक्तमिति ।

कुतूहलाद्वा कवितार्हतो वा
निष्पाद्यवस्तुश्रुतिगोचराद्वा ।
वितन्यमानां कवयः कृतिं मे
चेतःप्रदानेन पवित्रयध्वं ॥

**Colophon.** इति श्रीविष्णुदासदत्तकृतायां दीपिकाप्रकाशाख्यायां यात्रादिनिर्णयो नामाष्टमोऽध्यायः । समाप्तश्चायं ग्रन्थः ।

रसबाणर्तुभूसंख्ये शकाब्दे चापगे रवौ ।
लिखिता पुस्तिका ह्येषा भुवनेश्वरशर्म्मणा ॥

विषयः । श्रीनिवासकृतशुद्धिदीपिकाया व्याख्यानं ।

---

**No. 306.** शुल्वप्रदीपविवरणं By सुन्दरराज. Substance, country-made paper, 12 × 4 inches. Folia, 25. Lines, 11 on a page. Extent, 825 ślokas. Character, Nāgara. Date, Saṃvat 1817. Place of deposit, Benares City, Gobinda Bhaṭṭa. Appearance old. Prose. Correct.

**Beginning.** आपस्तम्बेन योयं व्यरचि भगवता शुल्वसंज्ञोगभीरः,
प्रश्नार्थं तस्य भाष्यप्रभृतिषु कथितं विस्तृतं वीक्ष्य सतृषं ।

संक्षिप्योद्दीपनार्थं कुशिककुलनिधिर्माधवाख्यस्य पेडुः,
पुत्रः शुल्बप्रदीपं विवरणमधुना सुन्दरो निर्मिमीते ॥
विचारयोगात् व्याख्यास्यामः, विचारो विवरणं, चतुरस्रादिरूपेण भूमेः
करणं, तस्य योगाः उपायाः ।

End. पूर्व्वेषां कृतत्वात् अन्विततैतत् बोधायनेन । अथमेधं प्राप्नुयात् आचार
अर्द्धविधामश्नुयेत् ? नेतरद्द्राघियते । आदितयेदाचरेत् आहृत्य कृताम्नात्
प्रत्याद्द्दीतेति ॥

Colophon. इति सुन्दरराजीये शुल्बविवरणे शुल्बप्रदीपे षष्ठः पटलः शुभमस्तु
संवत् १८१७ माघशुक्लप्रतिपदि–गुरौ अयरामेण लिखितं ।

विषयः । आपस्तम्बविनिर्मितशुल्बसूत्रव्याख्या ।

---

**No. 307.** ऋग्वेदीयश्राद्धप्रयोगः. Substance, country-made paper, 10×4 inches. Folia, 19. Lines, 7 on a page. Extent, 190 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍit Vāmanācāryya. Appearance, old. Prose and verse. Correct.

Beginning. श्रीगणेशाय नमः ।

ओम् आचम्य पवित्रसहितः प्राणानायम्य पवित्रं ते विततं ब्रह्मणस्पते
प्रभुर्गात्राणि पर्य्येषि विश्वतः । अतप्त तनूर्न तदामो अश्नुते, शृतास इद्वह-
न्तस्तत् समाशत अर्द्धकेशों ।

End. वषट् ते वायु आज्यपोभि तस्मै अपश × × × पिबिहत्वयं वर्द्धनं नासुरु-
तरोगिरो म यूयं पात स्वस्तिभिः सदा नः ।

Colophon. इति श्राद्धयज्ञप्रयोगः समाप्तः ।

विषयः । ऋग्वेदीयश्राद्धकथनम् ।

---

**No. 308.** श्राद्धवादार्थः. Substance, country-made paper, 15×3½ inches. Folia, 25. Lines, 7 on a page. Extent, 800 slokas. Character, Bengali. Date S.K. 1800. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Bhaṭṭagrām, Paṇḍit Ramhṛdaya Bhaṭṭācāryya. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्येत्यादि मङ्गलाचरणविशेषविचारस्तु 'प्रायश्चित्तवादार्थेऽनुसन्धेय' । पार्व्वणादिश्राद्धतत्त्वं पार्व्वणादिप्रतिपादकस्मृतिवचनस्य तात्पर्य्यविषयीभूतार्थं वक्ति निरूपयतीत्यर्थः । ननु पार्व्वणस्य स्वशब्देन निर्द्देशः चाभ्युदयिकादेः कथं चादिपदेन निर्द्देशः । उच्यते । 'सकलश्राद्धमध्ये पार्व्वणस्य प्रधानत्व-ज्ञापनार्थं पार्व्वणस्य स्वशब्देन निर्द्देशः । अन्येषामपि चादिपदेन तेन पार्व्वणः प्रकृतिः अन्यो विकृतिः यत्र तु श्राद्धकरणमुक्तं तत्र पार्व्वणं कर्त्तव्य मितिभावः । इत्यादि ।

**End.** अत्र केचित् एकोद्दिष्टं नान्यद्वारा कारयितव्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयमित्युक्तावपि न कदाचित् सगोत्रायेति विशेषणात् सगोत्रै-कोद्दिष्ट × असगोत्रजद्वारा, मातामहादेरेकोद्दिष्टन्तु असगोत्रद्वारापि करणीयमित्याहुः । अपरेतु वचने सगोत्रायेति विशेषण × × दपि एकोद्दिष्टं नान्यद्वारा कारयितव्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयमिति स्मार्त्त-व्याख्याने सामान्यैकोद्दिष्टनिवेशात् मातामहादेरेकोद्दिष्टमपि असगोत्रजद्वारा न कार्य्यमित्याहुः वस्तुतस्तु पूर्व्वमतं समीचीनं वचनबलादिति गुरुचरणाः पार्व्वणादिश्राद्धन्तु गोत्रजागोत्रजद्वारा कर्त्तव्यमित्युभयमतसिद्धं ॥

**Colophon.** इति श्राद्धवादार्थः समाप्तः । शकाब्दाः १८०० तारिख १० श्रावण ।

**विषयः ।** श्राद्धतत्त्वीयवादावलीनां सम्यग्विचारः ।

---

**No. 309. श्रीकृष्णकवचं.** Substance, country-made paper, 15×3 inches. Folia, 2. Lines, 12 on a page. Extent, 70 ślokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Candrakonā, Ayodhyā, Raghunathvāṭi, Babu Cakrapāṇi Rāya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ रामः । अथ कृष्णकवचं ।

भगवन् सर्व्वधर्मज्ञ कवचं यत् प्रकाशितं ।
त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो ॥

सनत्कुमार उवाच ।

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतं ।
नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥

तव मया कथितं मन्त्रं परं स्नेहाद् वदामि ते ।
अति गुह्यतरं तत्त्वं ब्रह्ममन्त्रौघविग्रहं ॥ इत्यादि ।

**End.**

कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ॥
इदं कवचमज्ञात्वा भजेद् यः पुरुषोत्तमं ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥

**Colophon.** इति सनत्कुमारतन्त्रे त्रैलोक्यमङ्गलं श्रीकृष्णकवचं समाप्तं ॥

विषयः । श्रीकृष्णस्य कवचं ॥

---

**No. 310.** श्रीकृष्णस्तोत्रं. Substance, country-made paper, 16×4 inches. Folia, 10. Lines, 6 on a page. Extent, 300 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grām Telivani. Appearance, fresh. Verse. Correct.

**Beginning.**

श्रीगोपालाय नमः ।
यं वेद वेदविदपि प्रियमिन्दिराया
यन्नाभिनीरजकर्णभंगरजो न धाता ।
गोपालबालललना वनमालिनं तं
गोधूलिधूसरशरीरमरीरमन्त ॥
कनककमलभालः केशिकंसादिकालः
समरभुवि करालः प्रेमवापीमरालः ।
अखिलभुवनपालः पुण्यवल्लीप्रवालः
स्तव भवतु विभूत्यै नन्दगोपालबालः ॥ इत्यादि ।

**End.**

अद्वैतवीथिपथिकैरुपास्याः
स्वानन्दसिंहासनलब्धदीक्षाः ।
शठेन केनापि वयं हठेन
दासीकृता गोपवधूविटेन ॥
न वयं कवयो न तार्किका
न च वेदान्तनितान्तपारगाः ।
न च वादविरासकाः परं
कपटाभीरकिशोरकिङ्कराः ॥

'अये मनो दुराचार विषयानुपसेवसे ।
गोविन्दे परमानन्दे मुकुन्दे किं न सीदसे ॥

**Colophon.** इति वैद्यवचूडामणिमहामहोपाध्यायश्रीविल्वमङ्गलभट्टदेववरविरचितं श्रीकृष्णस्तोत्रं समाप्तं ॥

विषयः । श्रीकृष्णस्य स्तुतिकथनं ।

---

**No. 311.** **श्रीविद्याया ऐश्वर्य्यादिस्वरूपाख्यं स्तोत्रं.** Substance, country-made yellow paper, 12×3 inches. Folia, 4. Lines, 5 on a page. Extent, 120 ślokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavāgīśa. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।
ऐश्वर्य्यं चर्य्यवीनं ग्रमधरखचितं सौजमत्यन्तगुह्यं
जड़ोवा मूर्खो वा यदि जपति जनः प्रत्यहं शुद्धचेताः ।
जिह्वाग्रे तस्य वाणी विचरति च सदा गेहमध्ये च लक्ष्मी-
श्चिरञ्जीवन्मुक्तः स भवति सहसा त्वत्प्रसादाद् भवानि ॥ (?)
प्रचण्डाद्यं मातर्वहुमतिसहितं दैत्यवी चक्रयुक्तं
सुगुप्तं मन्त्रेशं यदि लभति कश्चित् पुण्यवान् शुद्धचेताः । (?)
धरण्यां धन्योपि प्रवसति च सदा कामिनीं कामसङ्गां
स दीर्घायुः श्रीमान् त्रिभुवनविजयी सौख्यमोक्षं लभेच ॥ इत्यादि ।

**End.** मनस्त्वं कस्यापि त्वमपि परमात्मा परतरा ।
जगत्प्राणो मातस्त्वमपि गगनं त्वं हुतवहः ॥
धरित्री त्वं दुर्गे धरणिधरकन्ये वनमयी- ।
स्तुतिः का ते मातस्त्रिभुवनमखिले सुन्दरि परे ॥
महापुण्ये कन्ये धरणिधरकन्ये मनुमये ।
जगद्वन्द्ये सम्भो सकलगुणहीने गुणमये ॥
अये तारे सारे चरद्वदयचारोज्ज्वलकरे ।
कृपापारावारे मयि वितर दीनेऽक्षममपि ॥

**Colophon.** इति श्रीक्रमे श्रीश्रीविद्याया ऐश्वर्य्यादिस्वरूपाख्यं स्तोत्रं समाप्तं ।

विषयः । श्रीविद्याया ऐश्वर्य्यादिख्यापनं ।

---

**No. 312.** श्रीसूक्तन्यासः. Substance, country-made paper, 8×3 inches. Folia, 1. Lines, 16 on a page. Extent, 40 ślokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ श्रीसूक्तन्यासो लिख्यते श्रोम् हिरण्यवर्णामिति पञ्चदश × × सूक्तस्य श्रीर्देवता कर्दमानन्दचिक्लीतेन्दिरासुता ऋषयः आद्यास्तिस्रोऽनुष्टुभः, ततः एकाप्रस्तारपंक्तिः ।

**End.** आनन्दकर्दमश्चैव चिक्लीत × × च विश्रुताः ऋषयः ते त्रयः पुत्राः त्वं श्रीर्देवी × × × देवता । श्रीवर्चस्वं इति श्रीसूक्तन्यासः समाप्तः ।

**Colophon.** × × × × ×

विषयः । लक्ष्मीसूक्तमन्त्रन्यासः ।

---

**No. 313.** श्रौतोपयोगिकारिका. Substance, country-made paper, 10×4 inches. Folia, 14. Lines, 9 on a page. Extent, 252 ślokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ॥

अग्निहोत्रं मुनिश्रेष्ठ यस्मिन् देशे प्रवर्त्तते ।
दशयोजनविस्तीर्णं काश्मीरं तं तदुच्यते ॥

**End.** कुलालचक्रघटितं आसुरं मृण्मयं स्मृतं ।
तदेव चक्रघटितं स्थाल्यादि खलु दैवतं ॥

**Colophon.** इति श्रौतोपयोगिकारिका समाप्ता ।

विषयः । श्रौतकर्मण्युपयोगिपदार्थकथनम् ।

---

**No. 314.** षट्कर्मलक्षणं. Substance, country-made paper, 11×3 inches. Folia, 3. Lines, 7 on a page. Extent, 50 ślokas. Character, Bengali. Date ? Place of deposit, Upalatā Grām, Post Mehār, Zilla Comilla, Paṇḍit Jagadbandhu Tarkavagīśa. Appearance, fresh. Verse. Generally correct.

Beginning. अथ षट्कर्म्मलक्षणं । शारदायां ।

अथाभिधास्ये तन्त्रेऽस्मिन् सम्यक् षट्कर्म्मलक्षणं ।
सर्व्वतन्त्रानुसारेण प्रयोगफलसिद्धिदं ॥
शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटनस्तथा ।
मारणं तानि शंसन्ति षट्कर्म्माणि मनीषिणः ॥
तद्देवतादिक्पालादीन् ज्ञात्वा कर्म्माणि साधयेत् ।
रती-वाणी-रमा-ज्येष्ठा-दुर्गा-काली यथाक्रमात् ॥
षट्कर्म्मदेवताः प्रोक्ताः कर्म्मादौ कर्म्मसिद्धये ॥ इत्यादि ।

End. सर्व्वकार्य्येषु सौवर्णं क्रूरे स्यात् प्रेतकर्पटं ।
चिताङ्गं शान्तिके प्रोक्तं पञ्चगव्यन्तु वश्यके ॥
सर्व्वकार्य्येऽष्टगन्धः स्यात् क्रूरे चाष्टविषाणि च ।
शान्तिके लेखनी दूर्व्वा वश्यादौ शिखिपुच्छिका ॥
गृहेषु शान्तिकर्म्म स्यात् वश्यञ्च चण्डिकागृहे ।
देवालयेषु सर्व्वाणि श्मशाने क्रूरकर्म्म च ॥
सर्व्वेषां प्रथमे यामे शान्तिकर्म्म समारभेत् ।
तदा शान्तिं लभेद्धीमान् सत्यं हि सुरवन्दिते ॥

Colophon. इति षट्कर्म्मलक्षणं समाप्तं ।

विषयः । तान्त्रिकप्रसिद्धशान्तिवश्यादिषट्कर्म्मणाम् लक्षणनिरूपणं तेषां देवतादिनिर्देशः तेषां प्रयोगक्रमश्च ।

---

No. 315. षण्णवतिश्राद्धनिर्णयः. Substance, country-made paper, 8×3 inches. Folia, 2. Lines, 7 on a page. Extent, 30 slokas. Character, Nagari. Date ? Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācāryya. Appearance, new. Prose. Correct.

Beginning. अथ षण्णवतिश्राद्धनिर्णयः ।

तानि च अमामनुयुगक्रान्तिधृतिपातमहालयाः ।
अन्वष्टक्यं च पूर्व्वेद्युः षण्णवत्यः प्रकीर्त्तिताः ।

End. अथ तर्पणं, अष्टकान्वष्टिका पूर्व्वेद्युः श्राद्धेषु षोडशदिनव्यापिमहालयेषु श्राद्धाङ्गे इतरश्राद्धसंपाते तु श्राद्धेनैव तर्पणनिर्णयः अन्यत् सर्व्वमन्यतो ऽवगन्तव्यमिति संक्षेपः ।

**Colophon.** × × × × ×

विषयः। अध्ययननिवृत्तिविधिः।

---

**No. 316.** संहितासूत्रं. Substance, country-made paper, 10×5 inches. Folia, 13. Lines, 10 on a page. Extent, 150 slokas. Character, Nāgari. Date, Samvat 1855. Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, old. Prose. Correct.

**Beginning.** अथ नूनं वाद्धो अर्थं गन्तानूनं असामिभिमततः गन्तानो यत्र आगन्तामारिष्यन्यता आनो अद्य स मनस इति षट्पदकाले गन्तृत्वस्वरेण । नान्यागुवत् । एतं ते स्तोमं तु विजातविप्रः वस्त्रेव भद्रा विरचिने वश्मिणे चत्वारि अतच्चं मकारेण चतुर्थं अकारवर्जं ।

**End.** विशां क्षितिरसि मानुषीणां अन्यत्र मानुषाणां . सेनाजुवां न्यूचतुः ।

**Colophon.** इति संहितासूत्रं समाप्तं संवत् १८५५ ।

विषयः। संहितालक्षणानि विस्तारेण उक्तानि ।

---

**No. 317.** संहितोपनिषद्विवरणं. Substance, country-made paper, 16×5 inches. Folia, 61. Lines, 11 on a page. Extent, 2100 slokas. Character, Nāgari. Date ? Place of deposit, Benares City, Govinda Bhaṭṭa. Appearance, old. Prose. Correct.

**Beginning.** एषपन्था इत्याद्या बह्वृचब्राह्मणोपनिषत् तस्या इदं विवरणं अल्पग्रन्थं सुखावबोधार्थमारभ्यते । उपनिषदित्युपनिपूर्व्वस्य सदेः क्विबन्तस्य विशरणगत्यवसादनार्थस्य रूपमाचक्षते । विशेषेण चोपनिषच्छब्दवाच्यात्मविद्या, तादर्थ्यात् ग्रन्थोऽप्युपनिषत् ।

**End.** अध्यानन्तेवासित्वविशेषणात् संवत्सरवासिनोऽर्थप्राप्तं शिष्यत्वं इति, तथापि प्रवक्तुरशिष्यस्यैव नित्यप्राप्तिरस्याच । यो वाऽलं विद्यातुं स्यात्तमेधाविने तपस्विने वेत्यौत्येवं आचार्य्याः विद्याप्रवक्तारो मन्यन्ते द्विर्वचनं त्वत्रोप निषत्समाप्तिदर्शनार्थं ।

**Colophon.** इति श्रीमच्छंकरभगवत्कृतौ संहितोपनिषद्विवरणं समाप्तं ।

विषयः। संहितोपनिषद्व्याख्या ।

---

**No. 318.** संक्षिप्तसारे क्षदन्तटिप्पनी. Substance, country-made paper, 15 x 3 inches. Folia, 25. Lines, 8 on a page. Extent, 800 slokas. Character, Bengali. Date S.K. 1742. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Pandit Hārāncandra Tarkavāgisa. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

शतुःप्रकारकरणमायच्छदिति शिक्षये ।
अथातुक्रादिरस्य स्यादच्छादेशः परे × × ॥
तत्रातीति न कर्त्तव्यं गोष्ठ इत्यत्र दूषणात् ।
तिष्ठन्तीति तदा न स्याद् यदि च स्यात्तकारवान् ॥
शास्ता × × × × स्थानः शौले विज्ञेय एव दिक् ॥
दिशिति यत्रत्र स्थानः लतः स्यात् तदा स्थाने: शानः स्यादीदित्यत्र लिङ्गदतिदिष्टस्यापि प्रत्ययस्यादित्यर्थः । इत्यादि ।

**End.** मध्या । मध्यश्च तत् दिनश्चेति कर्म्मधारय इति ननु वर्णस्य वर्णेनेत्यत्र अवयवश्चिसमुदायश्चयोः समासावयमेव निराकरिष्यति । तत् कथमेतद्दिति तत्रैव व्याख्यास्यामः । × × तेन पूर्व्वात् पातात् चम्प्रत्ययश्च इति न प्रत्यय इत्यर्थः । शाने । एकाजि अन्तादित्यतोऽम् कथं नानुवर्त्तते चत्रिचितत्वात् । इत्यादि ।

**Colophon.** समाप्तेयं क्षदन्तटिप्पनी । श्रीश्रीरामः शरणं । श्रीदुर्गा ॥ शकाब्दा १७४२ तारिख ९म भाद्र ।

विषयः । संक्षिप्तसारीयक्षदन्तप्रकरणव्याख्याया व्याख्यानं ।

---

**No. 319.** संक्षिप्तसारे व्याकरणादर्शे सुबन्तपादविवरणं By वंशीवदन. Substance, country-made paper, 16 x 4 inches. Folia, 32. Lines, 6 on a page. Extent, 850 slokas. Character, Bengali. Date S.K. 1243. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Late Pandit Sripati Bhattāchāryya. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीश्रीराधाकृष्णाय नमो जयति ।

श्रीरामं जलदश्यामं जितकामं तनूभिवा ।
रसिंहासनासीनं ज्ञानसुप्राकरं भजे ॥

चम ॥ यतुः प्रकारकरणमित्यच्चदिति विग्नये ·
चुधातुर्कादिरस्य स्यादच्चादेशः परे मिमि ।
तत्रातीति न कर्त्तव्यं गोह इत्यत्र कूपशात् ।
तिष्ठतीति तदा न स्याद् यदि च स्यात्प्रकारणात् ॥ इत्यादि ।

**End.** स्यादौ । चादित्यऽकत्वाऽदितिकते प्रथमं सन्धिकार्य्याभावे चट्टाभिरित्यत्र मित् ऐत्तादेशः स्यात् प्रविडास्तु चत्र चश्य परत्वात् × × × × स्याने चादित्वाभावे चट्टाभिरिति न स्यादित्यपि दोषमाहुः । तत्र यत्र × × स्यानी स्यात्तदा × × पौत्वेके इत्यनेन पाठेतिपदं न स्यात् किन्तु पाठनीति । चत्र । प्रियाट्टामिति टौकायां नाम्नौप्रकृतिदौर्घादिति तु निषेधः ।

**Colophon.** इति वंशीवदनकविचन्द्रविरचिते व्याकरणादर्शे सुवन्तपादविवरणो नाम षष्ठः किरणः ।

चिन्त्यं प्रमादमुद्धृत्य पुस्तिकेयं सुपड्नता ।
कृता श्रीकविचन्द्रेण वंशीवदनशर्म्मणा ॥
शकाब्देऽनलवेदमित्रविमिते मीसे तथाषाढके ।
पक्षे चापितु कृष्णके शुभतिथौ वारे तथा भूमिजे ॥
नत्वा राघवपादपद्मयुगलं श्रीजानकीसेवितं ।
ग्रन्थं संलिखति क्रमेण सुकृती श्रीरामचन्द्रः सुधीः ॥

विषयः । संक्षिप्तसारीयसुवन्तपादव्याख्याया व्याख्यानं ।

---

**No. 320.** संक्षिप्तसारीयकारकपादटिप्पनी By वंशीवदन. Substance, country-made paper, 13×3 inches. Folia, 25. Lines, 8 on a page. Extent, 800 slokas. Character, Bengali. Date S.K. 1748. Place of deposit, Zilla Midnapur, Post Garvetā, Grām Khunverā, Late Pandit Srīpati Bhaṭṭāchāryya. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमः शिवाय ।

× × × × × कल्पद्रुकल्पकल्पनं ।
× × दूर्व्वादलश्यामं श्रीरामं प्रणमाम्यहं ॥

क्रिया सर्व्वकारकाणां निरूपिका ।

प्रहर्त्ती च निहर्त्ती च कारकाणां य ईश्वरः ।

अप्रयुक्तः प्रयुक्तोवा स कर्त्ता नाम कारकं ॥

इतीश्वरत्वेन च प्रधानत्वात् कर्त्तुः प्रथमं लक्षणमाह विभक्तिविभक्तलोपाय-तया "कर्त्रादिलक्षणानां व्याकरणाङ्गत्वमित्यादि ।

**End.** अतएव यत् × × × × × भावकर्मणोरात्मने इति क्वचिद्दृश्यते तल्लिपिकरप्रमादादेव । अनुदा × × आत्मनेपदमित्यतस्तवानुष्टमितिरिति ॥

श्रीवंशीवदनं विशिष्टविनयं विद्वज्जनप्रीणनं ।
सूते रायमती सती मतिमती श्रीमान् वशिष्ठः स्वयं ॥
व्याकारे क्रमदीश्वरेण रचिते श्रीनन्दिना शोधिते ।
गोयीचन्द्रकृते च तद्विरचिते पादो गतः पञ्चमः ॥
शकाब्दाः १७४८ ।

विषयः । गोयीचन्द्रकृतकारकटीकाया व्याख्यानम् ॥

---

**No. 321.** संक्षिप्तसारकारकपादटिप्पनी ( सारार्थदीपिका ) By गोपाल-चक्रवर्त्ती. Substance, country-made paper, 16×3 inches. Folia, 34. Lines, 8 on a page. Extent, 1,500 ślokas. Character, Bengali. Date S.K. 1747. Place of deposit, Zilla Midnapur, Post Garvetā, Grāma Khunverā, Late Paṇḍit Sripati Bhaṭṭācāryya. Appearance fresh. Prose. Correct.

**Beginning.** ॐ नमो रामाय ।

क्रिया ॥ ननु प्रकृतिप्रत्ययादिविभागपरिकल्पनया शब्दशासनं व्याकरणं । तदभिन्नत्वात् कथं क्रियासुख्यप्रयोजकादेर्व्याकरणत्वं उच्यते सुप्रत्यय-त्वविधायकं लक्षणं विधास्यमानं कर्त्रादिसंज्ञां विना न सम्भवतीति तद्धितत्वात् कर्त्रादिलक्षणानामपि व्याकरणत्वं एवं सत्यधिकारप्राप्तस्य नाम्न एव कर्त्रादिसंज्ञां विदधत् कर्माधीनव्यापारत्वात् कारकाणां कर्त्तुः प्राधान्यमतस्तल्लक्षणमेव प्रथममभिदधाति । क्रियानिमित्तं कारकमिति । इत्यादि ॥

**End.** षष्ठी । क्वचित्पदोपादानात् कर्माकरे च परे इत्याद्यर्थं सप्तम्यादिविषये लक्षणाभावाद् अप्रस्थापको विधिरयं वाच्यः ॥
गोयीचन्द्रकथासुधामविरतामास्वाद्य यन्नाधिरा
दाक्षोक्ताविवटिप्पणीं गुरुमतं सम्यग्विभा × × × ॥

श्रीश्रीकविचन्द्रपादकमलध्यानैकतानो × ×

कारकटिप्पणीं कृतिमुदे गोपालचन्द्रः सुधीः ॥

**Colophon.** इति श्रीकविचन्द्रचरणारविन्दानन्दित × × × × श्रीगोपाल-चक्रवर्त्तिविरचितायां सारार्थदीपिकायां कारकटिप्पणी समाप्ता ।

श्रीश्रीजाने दयाधाने चरणाम्बुजे मम ?

श्रीचक्रधरकृतिना लिपिरेषा समर्पिता ॥

शकाब्दाः १७४० ॥

विषयः । कारकटीकायाः व्याख्यानं ॥

---

**No. 322.** संक्षिप्तसारटिप्पणी (सारार्थदीपिका) (तिङन्तपादस्य). Substance, country-made paper, 14×4 inches. Folia, 99. Lines, 8 on a page. Extent, 2150 slokas. Character, Bengali. Date S.K. 1743. Place of deposit, Zilla Midnapur, Post Garvetā, Grāma Khunverā, Paṇḍit Harāṇa Candra Tarkavāgīśa. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ नमः शिवाय ।

यस्मिन्नसज्जगदिदं सदिवावभाति ।

भोगीव × सकलोपचितोपि × ॥

यस्माद्गुणैः क्षमिव चिन्मय एक एतत् ।

तस्मै नमोऽद्भुतमयाय महेश्वराय ॥

सकलविषयव्यापकत्वात् सन्धिपादमभिधाय पदज्ञापकं व्याकरणमिति श्रवणात् सकलपादानां धातुमूलकत्वात् धातुप्रत्ययमारभमाणस्तिङो वाक्य समापकत्वेन प्राधान्यात् तिङन्तमेवाभिदधत् वर्त्तमानकालस्य पुरोवर्त्तितया सान्निध्यात् तिङशब्देनाख्यातत्वप्रसिद्धा लडादयो व्यपदिश्यन्ते इति मन्वा-नस्येति वर्त्तमानकालीन-लट्-लक्षणमाह । धातोरित्यादि । इत्यादि ॥

**End.** ग्रन्थ × × × × × कर्त्तरि विहितो × × कर्म्म कर्त्तरि भवत्येवेति पूर्व्वं × × × × × कर्म्मकर्त्तरि कर्त्तृत्वस्य विद्यमानत्वादिति भावः ।

विशेषविश्रामपरा मतृसरा (?)

व्याख्यानमेतत् कलयन्तु सन्ततं ।

मया पुनस्तेषु कृतोऽयमञ्जलि

र्दुष्यं वचोलोपविभाव्य मामकं ॥ (?)

श्रीमद्भिः कविचन्द्रपादकमलैराचार्य्यपञ्चाननै-
रन्यैर्वा यदवाचि कुत्रचिदथो विद्यार्थिनोद्देन च ॥
तत् सर्व्वं कलयन्तु निर्म्मलधियः सन्तोऽत्र संक्षेपतो
यत्नान्यद्विहतं मयेदमखिलं ग्टह्णन्तु सारार्थिनः ॥
युक्तं मोक्तमिदं पूर्व्वैरितीर्षाकलुषं वचः ।
को हि शब्दाम्बुधेः पारमगादेकं विनेश्वरं ॥

**Colophon.** इति श्रीकविचन्द्रचरणारविन्दभिःस्यन्दमानमकरन्दमधुव्रतगयघट्टवन्द्यघटीय-कुलप्रसूत श्रीगोपालचक्रवर्त्तिविरचितायां सारार्थदीपिकायां द्वितीय-लिङ्गपादः समाप्तः × × × × × × ×
शकाब्दा १७४१ ।

विषयः । संक्षिप्तसारीयतिङन्तप्रकरणव्याख्याया व्याख्यानं ।

---

No. 323. संक्षिप्तसारसुवन्तटीकादीधितिः By रामेश्वरतर्कालङ्कार. Substance, country-made paper, 15×3 inches. Folio, 24. Lines, 11 on a page. Extent, 1000 ślokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetā, Grāma Khurverā, Late Paṇḍit Śrīpati Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

लुक् ॥ अथास्य सकलविषयव्यापकत्वात् ग्रन्थादौ करणं युक्तमितिचेन्न स्वमन्तेऽकोर्नियम्यन्तु मन्नकाभ्यामादिति केचित्, वयन्तु कारकपादे माम्नः कर्त्रादि संज्ञाविधानपूर्व्वकं प्रथमादिसप्तविभक्तीनां प्रथमपुरुषादेश्च विधानमुक्त मित्याहि ।

**End.** सद्दाहाभिर्वैर्त्तते इति नन्वेव संख्यामहत्त्वात् कथं बहुवचनं अतएव समासे पूजार्थस्तिवर्जमित्यस्य प्रत्युदाहरणमेव दर्शयिष्यति । च । एक-शेषात् बहुवचनमिति गुरवः तथाच चतुर्विंशत्यधिकशतमित्यर्थं अपरं चाचार्य्यटिप्पन्यादौ बोध्यं ।

**Colophon.** इति श्रीरामेश्वरतर्कालङ्कारकृता सुवन्तटीकादीधितिः समाप्ता ॥

विषयः । संक्षिप्तसारीयसुवन्तप्रकरणव्याख्याया व्याख्यानं ॥

---

**No. 324.** सङ्गीतरघुनन्दनः By रघुनाथसिंह (स्वकृतटीकासहितः). Substance, country-made paper, 10 × 5 inches. Folia, 52. Lines, 13 on a page. Extent, 1900 ślokas. Character, Nāgarī. Date ? Place of deposit, Ṭikāri Rāṇiganja, District Gayā, Paṇḍit Raghunātha Tripāṭhī. Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** श्रीजानकीवल्लभाय नमः ॥

मूलस्य । रामप्रेमपयोधिवर्द्धनविधुः शृङ्गारसारास्पदं
संसारार्णवपारतारणतरि र्मायातमोदीपिका ।
विद्युद्धा सुखकन्दवर्षणकरी कादम्बिनी कायसी
भवतु कुञ्जनिवासिनीविजयतां श्रीजानकी सर्वदा ॥
श्रीसीतेविन्ध्य रिपुगजसिंहो जयसिंहो राजसिंहोस्ति ।
तनुते तस्य तनुजो ग्रन्थं सङ्गीतरघुनन्दनाख्यं ॥ इत्यादि ॥

टीकायाः । श्रीगणपतये नमः ॥
वन्दे तत् पदकमलं यस्य मकरन्दं पुनाति जगदखिलं ।
× × × × × × × ॥
नत्वा गौरीशपादाब्जं टीका यस्यार्थचन्द्रिका ।
श्रीरामरासरसिकविनोदाय विधीयते ॥

**End.**

मूलस्य । सपत्नी सीता सङ्गीतेचणसुखितशिरः × × लौ ।
विश्वनाथ × × विन्द्यते समदमदन × × ॥ * ॥
इति श्रीमन्महाराजकुमार-श्रीविश्वनाथसिंहविरचिते सङ्गीतरघुनन्दने श्री-
जानकीरघुनन्दनयोगानन्दनृत्यवर्णनं नामैकादशः सर्गः ॥
अतः परं खण्डितं ।

टीकायाः । श्रीजानकीरघुनन्दनस्य परमदिव्यरासवर्णनरसासवं निपीय कथमानन्दमपि-
विरचवर्णनं करोमीति ॥ * ।

**Colophon.** इति सिद्धि-श्रीमन्महाराजाधिराजविश्वनाथसिंहकृतायां यथार्थचन्द्रिका-
ख्यटीकायामेकादशः सर्गः ॥ अतः परं खण्डितं ।

विषयः । १ सर्गे मङ्गलाचरणं ॥ २ रामचन्द्रस्य शृङ्गाररासवर्णनं ॥ ३ रामचन्द्रस्य वसन्त-
रासवर्णनं ॥ ४ जानकीजन्मभवनवर्णनं ॥ ५ कामवृन्दिकागमनवर्णनं ॥ ६ चारुशीलाकृत-
मानानुनयवर्णनं ॥ ७ जानकीसमागमवर्णनं ॥ ८ जानकीभूषणविधानवर्णनं ॥ ९ दोलावर्णनं ॥
१० सर्वाङ्गशोभावर्णनं ॥ ११ सर्गे जानकीरघुनन्दनयोगानन्दजनितनृत्यादिवर्णनं ॥

No. 325. सन्देहदोलावलीप्रकरणम् [मागधी]. Substance, country-made paper, 12 x 5 inches. Folia, 9. Lines, 11 on a page. Extent, 225 çlokas. Character, Nāgari. Date, Samvat 1594. Place of deposit, Benares City, Dikmaṇḍalācārya, Mahārāja Balacandra Sūri. Appearance, old. Verse. Correct.

**Beginning.** पणिविज्ञियपणय जयं जयसं, फिरथोरमणरमाणामो,
पयमागयं वमणदं नमो जिनेसरं वीरं ।

**End.** इयसयं वयसंसयपयपबूणरमयरणं समासेन लिखियं,
जगपवरागमजिनचंद्रसूरिशिसेण ।

**Colophon.** इति सन्देहदोलावली प्रकरणं । संवत् १५९४. आश्विन सुदि दशमी ॥

विषयः । आप्तोपदेशच्छलेन आत्मसन्देहकथनम् ।

---

No. 326. संन्यासिव्यासपूजा. Substance, country-made paper, 9 x 5 inches. Folia, 6. Lines, 12 on a page. Extent, 120 slokas. Character, Nāgari. Date ? Place of deposit, Bibihāṭī, Benares City, Paṇḍit Vāmanācārya. Appearance old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
आषाढ्यां पौर्णमास्यां प्रातःस्नानं कृत्वा क्षौरं विधाय स्नानं कृत्वा मध्याह्ने
स्नानं कुर्यात्, सन्ध्यां विधाय व्यासपूजास्थानं गच्छेत् ।

**End.** निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम्,
यथा शक्तिं प्रसूर्षां गमिष्यामो वयं मुदा ॥
यज्ञेन यज्ञमयजन्तिति परेशुर्विसर्जनं ॐ तत्सत् ब्रह्मार्पणमस्तु ।

**Colophon.** इति व्यासपूजा समाप्ता ।

विषयः । संन्यासिनां गुरुपादुकापूजनम् ।

---

No. 327. सप्तशतीप्रयोगः By नागोजीभट्ट. Substance, country-made paper, 14 x 5 inches. Folia, 22. Lines, 11 on a page. Extent, 500 ślokas. Character, Nāgar. Date Saṃvat 1810. Place of deposit, Benares, Paṇḍit Govinda Bhaṭṭa. Appearance, old. Prose. Incorrect.

**Beginning.** सा सविधि ब्राह्मणे उष यः कामयेत पुन मे प्रत्याजायेयमिती × ×
पुनर्भुवमधिकृत्य तदानुसन्धेयोऽस्या मन्त्र उक्तः रात्रिं प्रपद्ये पुनर्भूमयो

भूकम्पां × × × चर्चा युवतिं कुमारिबीमादित्यचतुर्भे बालः प्राचाय सोमेः × × × पृथिवी शरीरमिति । चन्द्र रात्री जपमानात् सिद्धिः चस्यफलं × × × ज्ञानं परं सकलं तु मोच इति तन्त्रोक्तं चयच देवीविषयो मन्त्रः ।

**End.** चय रहस्यत्रयस्य चयोऽध्यायाः × × × । तत्संबुकात्यायनीतन्त्रविरोधादिति ध्येयं । चय निष्कदचिणा दरिद्राणां चतुःसुवर्णदचिणा समर्थानां ॥

**Colophon.** इति श्रीशिवभट्टसुतो नागोजीभट्टकृते मार्कण्डेयपुराणान्तर्गत-सप्तशतीव्याख्याने चण्डीस्तोत्रप्रयोगविधिः । संवत् १८९० ।

विषयः । चण्डीपाठक्रमकथनं देवीसूक्तादिव्याख्यानञ्च ॥

---

**No. 328.** सप्तसंस्थाप्रयोगः By अनन्तदीक्षितः. Substance, country-made paper, 10×4 inches. Folia, 42. Lines, 10 on a page. Extent, 840 ślokas. Character, Nāgar. Date ? Place of deposit, Benares City, Bibihāṭi, Paṇḍit Vāmanācārya. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

नमामि पार्श्वतस्तु नु भक्तानां सिद्धिदायकं ।
क्रियते चपकाराया वशिष्टा सप्तसंस्थका ॥

अवयाकर्मार्था इत्यर्थः । इदानीं अवयाकर्माग्याः सप्तावशिष्टा उच्यन्ते ।

**End.** कृत्तिकादिषु काम्यश्राद्धं कृत्तिकारम्भतेनाद्यमीश्राद्धवत् सर्व्वं कार्य्यं । यद्वा-शौनकोक्तरीत्या इविश्राद्धवत् इत्यष्टकाविकृतिश्राद्धप्रयोगः ।

**Colophon.** इति श्रीमद्दुयज्ञोपवीताभिधान-श्रीविश्वनाथसूनुना दीक्षितानन्तेन सर्वोपकारायावशिष्टसमन्त्रकअवयाकर्माद्यपाकसंस्थाप्रयोगः समाप्तः ।

विषयः । अवयाकर्मादिसप्तपाकयज्ञसंस्थाकथनम् ।

---

**No. 329.** सप्तपाकसंस्थाप्रयोगः (प्रयोगसारीयः) By विश्वनाथ. Substance, country-made paper, 10×5 inches. Folia, 23. Lines, 9 on a page. Extent, 460 ślokas. Character, Nāgarī. Date Samvat. 1908. Place of deposit, Bibihāṭi, Benares City, Paṇḍit Vāmanācārya. Appearance, new. Prose. Correct.

